

# मिवारप्रतापम्।

## (नाटकम्)

---

महामहोपाध्याय-महाकवि-भारताचार्य्य-

श्रीयुक्तहरिदाससिद्धान्तवागीशभट्टाचार्य्य-

प्रणीतम्।

---


कलिकाता ४१ संख्यक-टेवलेन-नामके-

तत्रस्थ-सिद्धान्तविद्यालयात्

श्रीहेमचन्द्रतर्कवागीश-भट्टाचार्य्येण

प्रकाशितम्।

---

१३५४ वङ्गाब्द

सौराग्रहायणमासि।



महामहोपाध्याय-महाकवि-भारताचार्य्य-श्रीहरिदाससिद्धान्तवागीशः ।

# निवेदनम् ।

१३४९ वङ्गाब्दीयसौराषाढ़मासस्य सप्तविंशदिवसरजन्यां कोटालि-पाड़ान्तर्गते ऊनशियाग्रामे मद्भवने प्रथमो वङ्गीयप्रतापस्याभिनयः, १३५२ वङ्गाब्दीयसौरज्यैष्ठमासस्य नवमदिवसरजन्यां कलिकाता-राजधान्यां मिनार्भारङ्गमञ्चे द्वितीयस्तस्याभिनयः, १३५२ वङ्गाब्दीय-सौरश्रावणस्यैकादशदिवसरजन्यां कलिकाताराजधान्यामेव ष्टाररङ्गमञ्चे तृतीयश्च तस्याभिनयः सञ्जातः। तेषु च त्रिष्वेव कालेषु रचनाया अभिनयस्य च गरीयानिवाभवत् प्रशंसावादः। तेन चानन्दातिरेकात् उत्साहातिशयाच्च १३५२ वङ्गाब्दसौराषाढ़सप्तदशदिवसे समारभ्य तद-ब्दीयसौरकार्त्तिकाष्टाविंशदिवसे समापितमिति द्वादशदिवसाधिकमास-चतुष्टयेन मिवारप्रतापं नाम नाटकमिदं मया निरमायि। इदमपि च १३५२ वङ्गाब्दसौरफाल्गुनमाससप्तदशदिवसरजन्यां कलिकाता-राजधान्यां ष्टाररङ्गमञ्चे प्राच्यवाणी-प्रतिष्ठानोद्योगेन प्रथममभिनीतम्। अत्रापि सञ्जाता रचनाया अभिनयस्य च भूयसी प्रशंसा। एषु च कलिकातागताभिनयेषु श्रीमान् शशिशेखरविद्यारत्नकाव्यतीर्थः सुष्ठु, परिचालयन् विशेषेण यशस्वी जातः। तदिदमपि मिवारप्रताप-नाटकं भगवदनुग्रहेण मुद्रापितम्। श्रद्धेयास्तत्रभवन्तः सुधियः सदयहृदयेन पश्यन्त्विति सविनया प्रार्थना।

परिशेषे च सक्षोभः सलज्जश्चायमनुरोधः, यत्, संशोधकशैथिल्यात् मुद्राकरवालिश्याच्च वङ्गीयप्रतापे मिवारप्रतापे च विद्यमानमनेकमशुद्धं दयया संशोध्यमिति।

१३५४ वङ्गाब्दीय-<br>सौरकार्त्तिकदशमदिवसीयम्।

विनीत-<br>श्रीहरिदासदेवशर्म्मणः।

# नाट्योल्लिखितव्यक्तिगणः ।

## पुरुषगणः ।

| | | |
|---|---|---|
| १ । | सूत्रधारः | प्रस्तावसूचकः । |
| २ । | सुप्रभदेवोपाध्यायः | राजपण्डितः । |
| ३ । | शान्तिशरणमिश्रः | राजपुरोहितः । |
| ४ । | प्रतापसिंहः | मिवाराधिपतिः । |
| ५ । | शम्भुसिंहः | प्रतापसिंहसामन्तः । |
| ६ । | रणजित्सेनः | प्रतापसिंहसेनापतिः । |
| ७ । | भीमसिंहः | प्रतापसिंहमन्त्री । |
| ८ । | रङ्गवीरः | भिल्लराजः । |
| ९ । | वादसाहः | भारतसम्राट् आकवरः । |
| १० । | मानसिंहः | आकवरसेनापतिः । |
| ११ । | सेलिमः | आकवरपुत्रः । |
| १२ । | शक्तसिंहः | प्रतापसिंहस्य वैमात्रेयो भ्राता । |
| १३ । | अमरसिंहः | प्रतापसिंहस्य पुत्रः । |
| १४ । | साहवाजखाँ | देवीदुर्गाध्यक्षः । |
| १५ । | मवारकः | साहवाजस्य वयस्यः । |
| १६ । | नुरमहम्मदः | साहवाजस्य मन्त्री । |
| १७ । | सोलेमानः | साहवाजस्य सेनापतिः । |
| १८ । | दूतः | प्रतापसिंहप्रेरितः । |
| १९ । | साधुकः | प्रतापसिंहभृत्यः । |
| २० । | मधुकः | प्रतापसिंहभृत्यः । |

स्वस्त्ययनकरणार्थिनस्त्रयो ब्राह्मणाः, त्रयो भिल्लाः, दौवारिकः, सेलिमसैनिकः खोरासानी मूलतानी च । समाप्तिकाले भरतगणश्च, मध्ये चारणगणश्च, उभयपक्षसैन्याश्च ।

## स्त्रीगणः ।

| | | |
|---|---|---|
| १ । | नटी | सूत्रधारपत्नी । |
| २ । | कमला | पृथ्वीराजपत्नी । |
| ३ । | उद्यानपाली | आकबरस्य उद्यानरक्षिका । |
| ४ । | गौरी | प्रतापसिंहभगिनी । |
| ५ । | इन्दिरा | प्रतापसिंहकन्या । |
| ६ । | प्रतिहारिणी | माड्वराजस्य अन्तःपुरदूती । |
| ७ । | भगवती दासी | कालीमन्दिरकिङ्करी । |

नर्त्तकीगणाश्च ।

— o —

## यवनिका-(सिन्) परिचयः।

### प्रथमाङ्क

| | |
|---|---|
| प्रथमदृश्यम | नाट्यशाला। |
| द्वितीयदृश्यम् | पर्वतसन्निधाने देवमन्दिरम्। |
| तृतीयदृश्यम् | पर्वतसन्निधाने देवमन्दिरम्। |

### द्वितीयाङ्क

| | |
|---|---|
| प्रथमदृश्यम | राजपथसन्निधाने उपवनम्। |

### तृतीयाङ्क

| | |
|---|---|
| प्रथमदृश्यम् | बादशाहस्य मन्त्रणागृहम्। |

### चतुर्थाङ्क

| | |
|---|---|
| प्रथमदृश्यम् | पर्वतसन्निधाने देवमन्दिरम्। |
| द्वितीयदृश्यम् | पर्वतसन्निधाने युद्धशिविरम्। |
| तृतीयदृश्यम् | समराङ्गनम्। |
| चतुर्थ दृश्यम् | नाट्यशाला। |
| पञ्चमदृश्यम् | पार्वत्यक्षुद्रनदी प्रान्तरञ्च। |

### पञ्चमाङ्क

| | |
|---|---|
| प्रथमदृश्यम् | निविड़ महावनम्। |
| द्वितीयदृश्यम् | पर्वतसमतलभूमौ पर्णकुटीरम्। |
| तृतीयदृश्यम् | पर्वतसमतलभूमौ पर्णकुटीरं वनविड़ालश्च। |

### षष्ठाङ्क

| | |
|---|---|
| प्रथमदृश्यम् | पर्वतसन्निधाने देवमन्दिरम्। |
| द्वितीयदृश्यम् | दुर्गे विलासभवनम्। |
| तृतीयदृश्यम् | दुर्गे मन्त्रणाभवनम्। |

| | |
|---|---|
| चतुर्थदृश्यम् | दुर्गसम्मुखे उच्चस्तम्भः। |
| पञ्चमदृश्यम् | दुर्गसम्मुखे समराङ्गनम्। |
| षष्ठदृश्यम् | दुर्गं, परिखा, अग्निकाण्डञ्च। |

———o———

१३५२ वङ्गाब्दीयसौरफाल्गुनसप्तदशदिवसरजन्यां कलिकाताष्टाररङ्गमञ्चे इमे खल्वभिनेतार आसन्।

———o———

नान्दी—श्रीसनत्कुमारवन्द्योपाध्यायः एम्, ए, वि, टि।

सूत्रधारः—श्रीजगन्मोहनज्योतिर्विनोदः।

सुप्रभदेवोपाध्यायः—श्रीयामिनीकान्तविद्यारत्नः।

शान्तिशरणमिश्रः—श्रीमधुसूदनकाव्यतीर्थः।

प्रतापसिंहः—श्रीफणिभूषणरायसाहित्यविनोदः।

शम्भुसिंहः—श्रीरवीन्द्रनाथभट्टाचार्य्यः वि, ए।

रणजित्सेनः—श्रीशशिशेखरकाव्यतीर्थविद्यारत्नः।

भीमसिंहः—श्रीक्षितीशचन्द्र-आचार्य्यव्याकरणतीर्थः।

रघुवीरः—श्रीवीरेन्द्रनाथभट्टाचार्य्यः।

वादसाहः—श्रीश्रीपतिकाव्यव्याकरणतीर्थः।

सेलिमः—श्रीअदितिरञ्जनठाकुरः।

मानसिंहः—श्रीविष्णुदासभट्टाचार्य्यः।

शक्तसिंहः—श्रीराखालचन्द्रचक्रवर्त्ती।

अमरसिंहः—श्रीभवेशचन्द्रभट्टाचार्य्यः।

साहवाज खाँ—श्रीसुधीन्द्रनाथचतुर्धुरीणः।

मवारकः—श्रीजगन्मोहनज्योतिर्विनोदः।

नूरमहम्मदः—श्रीविनयभूषणचक्रवर्त्ती।

सोलिमानः—श्रीमणीन्द्रनाथठाकुरः।

दूतः—श्रीसन्तोषकुमारभट्टाचार्य्यः। ৬

साधुकः—श्रीकालीनाथवेदान्तशास्त्री।

मधुकः—श्रीगोविन्दचन्द्रचक्रवर्त्ती।

त्रयो भिक्षाः—श्रीकिशोरीचन्द्रः, श्रीविश्वनाथदासः, श्रीसुरेन्द्रनाथचक्रवर्त्ती।

स्वस्त्ययनकरणार्थिनस्त्रयो ब्राह्मणाः—श्रीजगन्मोहनः, श्रीविष्णुदासः, श्रीश्यामापदभट्टाचार्य्यः।

चारणगणः—श्रीविश्वनाथदासः, श्रीकिशोरीचन्द्रः, श्रीश्रीश दे।

दौवारिकः, सैलिमसैनिकगणः, खोरासानी, मूलतानी, भरतगणः, उभयपक्षसैन्यगणः, शिविकावाहकाश्च।

—०—

## स्त्रीगणः।

नटी—श्रीसुधीरकुमारविश्वासः।

कमला—श्रीअजितकुमारमजुमदारः।

उद्यानपाली—श्रीकालिदासभट्टाचार्य्यः।

गौरी—श्रीवीरेन्द्रकुमारभट्टाचार्य्यः।

इन्दिरा—श्रीआरतिभट्टाचार्य्या।

प्रतिहारिणी—श्रीकिशोरीमोहनदासः।

भगवतीदासी—श्रीमणीन्द्रनाथठाकुरः।

नर्त्तकीगणः—श्रीसुधीरः, श्रीशशाङ्कमुखोपाध्यायः।

प्रतिहारिणी।

परिचालकः—श्रीशशिशेखरकाव्यतीर्थविद्यारत्नः।

नाट्यशिक्षकः—श्रीजगन्मोहनज्योतिर्विनोदः।

सङ्गीतशिक्षकः—श्रीनिर्म्मलकुमारगङ्गोपाध्यायः।

# मिवारप्रतापम् ।

## नाटकम् ।

——:००:——

## प्रथमोऽङ्कः ।

——०——

योजायापदयोस्तले त्रिजगतामूर्द्धं च सन्तिष्ठते
धत्ते यस्य कृशानुमम्बु च सुखं शीर्षे सदा सन्ततम् ।
भुङ्क्ते योऽप्यमृतं विषञ्च विषमं पाथोधिमन्थोद्भवं
वन्दे चित्रचरित्रशक्तिनिकरं ज्योतिः परं तं हरम् ॥१॥

अपि च ।

सुनीतिरिव सम्पत्तिं पूर्णिमेव च कौमुदीम् ।
एषा परिषदाप्नोतु तदीयदयया मुदम् ॥२॥

नान्द्यन्ते सूत्रधारः । हन्त ! मे मदेषा साधीयसी संवृत्ता । तदार्य्या चिरयति कथमत्रागन्तुम् ।

ततः प्रविशति नटी नृत्यन्ती गायन्ती च ।

संस्कृतभारती भारतसंस्कृतिरुदयतु पुनरपि भारतवर्षे ।
भवने भवने वदने वदने खेलतु संस्कृतभाषा ।
मयूरीसदृशी वारिदवर्षे ।

वेदिककर्म्म वैदिकधर्म्ममाचरतु नरो नारी हिन्दुप्रकर्षे ।
अस्मिन् कलियुगे योऽभूत् कृतयुगे स भवतु भावो जनगणहर्षे ॥

सूत्र। आर्य्ये! ललितमधुरा तवेयं गीतिः। किन्तु तव पृच्छामि—भावपरिवृत्तिरधुना प्रार्थनीयैव; संस्कृतभाषाया उज्जीवनाशंसा तु कथम्?

नटी। सा क्खु मिच्चुणा कवलिदा त्ति। (क)

सूत्र। (सहासम्) क एवं ब्रवीति?

नटी। सिक्खिदो लोओ। (ख)

सूत्र। नन्वशिक्षित इति ब्रूहि। येन हि—

वेदादिशास्त्रनिचयस्फुटदिव्यमूर्त्तिः
सा वाक् किमन्यवचनादमरा म्रियेत।
मध्याह्नसूर्य्यकरगो हि यदि ब्रवीति
रात्रिः किलेयमिति हन्त! स एव मूढ़ः ॥३॥

भवतु। अवश्यमेव द्रक्ष्यसि तयेव संस्कृतभाषया ग्रथितेन नाटकेनाद्य परिषदमेनामनुरञ्जयिष्याम इति।

नटी। अध केण। (ग)

सूत्र। कोटालिपाड़ीनशियानिवासी
महाकविप्राप्ययशोऽभिलाषी।

---

(क) सा खलु मृत्युना कवलितेति।

(ख) शिक्षितो लोकः।

(ग) अथ केन?

शाकन्तु नागेन्दुमिते शकाब्दे
यद्विर्ममे श्रीहरिदासशर्म्मा ॥४॥

तदेवाद्य वङ्गीयप्रतापानुजं मिवारप्रतापं नाम नाटकमभि-
नेतुमभिप्रेमः ।

नटी । तहिं खु बहुलोओ ज्जेव णिन्दां करिस्सदि । (घ)

सूत्र । कथं नाम ?

नटी । परीक्खिदगुणअं पुराणं विवज्जिअ अपरीक्खिद-
गुणस्स णूदणस्स परिग्गहेण । (ङ)

सूत्र । आर्य्ये ! नूतनग्रहणे नास्ति परीक्षापेक्षा,
नूतनत्वमेव ग्रहणप्रयोजकम् । पश्य—

नवं नारिकेलं नवीनञ्च चेलं
रमाञ्चापि नव्यां गृहं नूतनञ्च ।
वचश्चाप्यपूर्व्वं विशेषेण सर्व्वे
रसज्ञाः पुराणाच्चिरायाद्रियन्ते ॥५॥

नटी । होदु दाव । तहवि तु अणवअदभावदाए ज्जेव
णिन्दां करिस्सदि । (च)

---

(घ) तस्मिन् खलु बहुलोक एव निन्दां करिष्यति ।

(ङ) परीक्षितगुणकं पुराणं विवर्ज्य अपरीक्षितगुणस्य नूतनस्य
परिग्रहेण ।

(च) भवतु तावत् । तथापि तु अनवगतभावतयैव निन्दां
करिष्यति ।

सूत्र। तत् सत्यम्। तथापि त्वहं निन्दाकारिणं परमोपकारिणमेव मन्ये । येन हि—

दोषी जनो निजमुखे दधदन्यदोषं
कुर्य्याद्धिनिन्दितुमनास्तमदोषमेव ।
कर्षन् मलं हि वदनेन वनं वराहः
आलोड़यन् परममेव परिष्करोति ॥६॥

नटी। अध कए वि देसभासाए गढ़िदस्स रूवअस्स गाहणे को दोसो। (छ)

सूत्र। (जनान्तिकम्) आर्य्ये! ब्रवीमि ते किमपि रहस्यम्। अस्ति खलु संस्कृतभाषया ग्रथितस्य रूपकस्य ग्रहणे गरीयानाश्वासः। तथा च—

सर्व्वथैवानभिज्ञोऽपि ज्ञापयन् निजविज्ञताम् ।
सदोषमपि हि स्थानं प्रशंसेत् खल्वसंशयम् ॥७॥

हन्त! दुरतिक्रमः किल कालमहिमा। यदेकदा खल्वसाधारण एवासीत् संस्कृतभाषाया मानः। अधुना तु—विधर्म्मिसंसर्गवशात् स मानो निहीनतां प्राप्त इति प्रतीतिः।

नेपथ्ये—

सुक्षत्रियस्त्वञ्च मिवारराजो न तेन संसृष्ट इति प्रतीहि ॥८॥

(छ) अथ कयापि देशभाषया ग्रथितस्य रूपकस्य ग्रहणे को दोषः।

नटी । (सविस्मयम्) अज्जउत्त ! क एस तुह वअणं समत्थेदि ? (ज)

सूत्र । (विलोक्य) आर्य्ये ! एष तावदुपाध्यायः सुप्रभदेवो द्वितीयमर्थमाविष्कृत्य मद्वचनं समर्थयन् देवभवनं प्रविशति ।

इति निष्क्रान्तौ ।

———०———

## प्रस्तावना ।

—०—

---

(ज) आर्य्यपुत्र ! क एष तव वचनं समर्थयति ?

अथ प्रविशति कालोशैलसन्निहितकालीमन्दिरालिन्दे सचिन्तः सुप्रभदेवः।

सुप्रभ। (देवतां प्रणम्य) साधु शैलूषराज! साधु। सत्यमेवाह भवान्—

विधर्म्मिसंसर्गवशात् स मानो निहीनतां प्राप्त इति प्रतीतिः।

तत एवाहमपि ब्रवीमि—

सुक्षत्रियस्तत्र मिवारराजो न तेन संस्पृष्ट इति प्रतीहि॥

प्रविश्य देवसेवकः शान्तिशरणमिश्रः। (उपाध्यायमभिवाद्य) उपाध्याय! किं नाम संवृत्तम्?

सुप्रभ। किमद्यापि नाधिगतो वृत्तान्तः?

शान्ति। नाधिगत एव।

सुप्रभ। गतेऽह्नि मध्याह्नकाले मानसिंहः समागतः।

शान्ति। (सविस्मयम्) किमस्मिन् मिवारराज्य एव?

सुप्रभ। मिवारराज्य एव कमलमीरनगर एव राजभवन एव।

शान्ति। (सविस्मयवैकल्यम्) असम्भावनीयो वृत्तान्तः। तत् किमेकको रक्षिसमेतो वा कियत्सैन्योपपन्नो वा?

सुप्रभ। एकक एव।

शान्ति। (सहर्षम्) हन्त! तर्हि यदैवागतस्तदैव वन्दीकृतः।

सुप्रभ। शान्तं पापम्। श्रीमन्महाराजः प्रतापसिंहो न

यवनः। येन वैरिणो रन्ध्रमनुसन्दधीत निःसहायस्तावन्नीयात्।
अपि त्वसौ सूर्य्यवंशावतंसो वीरधुरीणो न्यायानुवर्त्ती च।
ततश्च—वीरो वीरान्तरे प्राप्ते हृष्यत्येव हिनस्ति न।

दीपोऽन्यदीपसंयोगे वर्द्धते हि न हन्ति तम् ॥८॥

अनेनैव चिरनिव्यूढविश्वासेन मानसिंहोऽप्येकक एवागत इति प्रणिधीयते।

शान्ति। अथास्य किमागमनप्रयोजनमवगतम्?

सुप्रभ। किमन्यत्, महाराजप्रतापसिंहेन सह बादसाहस्य सन्धिबन्धनमेव प्रयोजनमनुमानसिद्धं सर्व्वेषाम्।

शान्ति। तत् किमत्रोपस्थाने मानसिंहस्य स्वारसिकी खल्विच्छासीत्।

सुप्रभ। न खलु स्वारसिकी। अपि तु—

दृढमिह यवनानामाधिपत्यं स्वदेशे
चिरमनुनयवृत्तिर्भीतिसङ्गिन्यवस्था।
परिणयविधियोगाज्जातिधर्म्मप्रणाशः
समजनि समवायः कारणानां चतुर्णाम् ॥१०॥

शान्ति। स्थाने खलु मानसिंहस्यात्रोपस्थाने भवदुक्तमिदं कारणचतुष्टयम्। कौटिल्य इव कूटकौशलो बादसाहोऽपि नतरामिदमनुमेने। मन्ये च तस्यायमभिसन्धिरासीत्—

हिन्दोर्यवनसम्बन्धः सन्धौ सिध्यत्यसम्भवः।
अन्यथैनं समाक्रामेन्मानसिंहस्तु सिंहवत् ॥११॥

सुप्रभ। समीचीनमिदं सम्भावनं भवतः।

शान्ति। नन्वनन्तरः को वृत्तान्तः?

सुप्रभ। अथ मानसिंहो राजभवनद्वारमुपेत्य द्वारपाल-मब्रवीत—ब्रूहि महाराजं प्रतापसिंहम्, आतिथेयीमर्थयमानो मानसिंहः प्रथमं साक्षात्कारमपेक्षते, परञ्च पङ्क्ति-भोजनमिति। द्वारपालाद्विदितवृत्तान्तश्च मिवारराजो विस्मया-कुलहृदयो निरतिशययवनसंसर्गिणं परिजिहीर्षन् शिरःपीड़ाप-देशेनात्मजममरसिंहं प्रेषयितुमियेष। अथ पङ्क्ति-भोजनेनापि सन्धातुकामः शक्तसिंहः प्रतिपदमेव प्रतिवदन्नग्रजे-नावज्ञातः सक्षोभं गेहान्तरं गतः।

शान्ति। हन्त! ममयमहिम्ना मनीषिणामपि मतयो विक्रियन्ते। येन हि युक्तमुक्तवन्तमपि शक्तसिंहं प्रत्याचक्षाणो राजा न खलु नीतिवैचक्षण्यमाविश्चकार। यतश्च प्रथमतो द्वितीयः संसर्गः, द्वितीयतश्च सकृन्मात्र एव सः, अस्ति च तत्र विविधमेव रहः प्रायश्चित्तम्, तदनुष्ठानेन च सर्व्वसामञ्जस्ये सम्भवति किमिदं दुर्व्यवसितं नाम।

अयं कल्याणकल्लोलः स्वयं सम्मुखमागतः।
दृढ़ेन स विशालेन शिलाबन्धेन वारितः॥१२॥

सुप्रभ। अये! शूरशिरोमणिः प्रतापसिंहो न खलु यवन इव कूटकौशली, नवा ब्राह्मण इव दुर्बलहृदयश्च। तेन हि— वीरो वरं स्वीकुरुते महापदं
नहि च्छलं संश्रयते तु तुच्छवत्।

अग्निर्हि निर्वाणमलं व्रजत्यपि
न शीततां याति समीरणेरितः ॥१३॥

शान्ति। भवतु। कुमारेणागत्य किमनुष्ठितम्?

सुप्रभ। कुमारेणागत्य अभिवादनमन्तरेणाञ्जलिबन्धनम्, स्पर्शनं विना महामूल्यासने समुपवेशनम्, गुणगरिमाणं परिहाय आश्रयमहिम्न एव परिवर्णनञ्चानुष्ठितम्।

शान्ति। मन्ये—मानसिंहेनापि तत्सर्व्वमवगतम्।

सुप्रभ। किं ब्रवीषि—चतुरचूड़ामणिः खलु मानसिंहः। तेन च तदवगच्छत एव तस्य मालिन्यमापन्ना मुखलक्ष्मीः, सञ्जातञ्च सन्धौ सन्दिहानं मनः। तथाप्याशाशेषवशेनासौ तत्रासन एव विशश्राम। अत्रान्तरे कञ्चुकी समागत्य कुमारमवोचत्—महाराजो भवन्तं द्रष्टुमिच्छति। प्रातिष्ठत च कुमारः। कञ्चुकी च ब्राह्मणोचितसदालापेन मानसिंहं समवर्द्धयत्।

शान्ति। अथ श्रोतुमिच्छामि पराचीनं वृत्तान्तम्।

सुप्रभ। परञ्चैकस्यामेव पङ्क्तौ किङ्करेण केनचिद्विन्यस्तमासनयुगलम्, पाचकेनानीतमुत्तमान्नपूर्णं भोजनभाजनद्वयम्, आगता च मानसिंहमनसि सन्धिसम्पादने कियत्याशा।

शान्ति। अनन्तरं किं वृत्तम्?

सुप्रभ। अनन्तरञ्च कञ्चुकिनमनुयुञ्जानो द्वितीयमासनं कुमारस्य जानानस्तदनुरोधात् प्रथममासनमध्यासीनो मानसिंहः प्रत्यैक्षत कुमारागमनम्।

शान्ति । (सोत्कण्ठम्) अथागतः कुमारः ?

सुप्रभ । हन्त ! तस्यागमनसम्भवे तत्प्रस्थानमेवा-सम्भवमासीत् ।

शान्ति । ननु तदानीं किमनुष्ठान आसीन्मानसिंहः ?

सुप्रभ । चिरयति कुमारे पङ्क्तिभोजनमसम्भवमेव निश्चिन्वानो मानसिंहः कश्चित्किनष्वान्नमयदेवताञ्च प्रणम्य परिहाय च भोजनासनं प्रातिष्ठत । प्रतिष्ठमाने च तस्मिन् काचित् किङ्करी समागत्य पश्यत एव तस्य पदाङ्गान् प्रक्षालयामास गङ्गावारिणा ।

शान्ति । हा हन्त ! हा हन्त ! महामानास्पदे मानसिंहे खल्वे तावत्यवज्ञा न खलु राज्ञो विज्ञतां प्रज्ञापयति ।

सुप्रभ । वयमपि न ममाचरणं समर्थयामः ।

शान्ति । किं ब्रवीमि—

आशीविषे मणिं दातुं स्वयं स्वगृहमागते ।
अनादृत्य विधृत्यासौ प्रत्युत प्रहृतः परम् ॥१४॥

यातु तावत् । साक्षादेव तदवेक्ष्य मानसिंहेन किमाचरितम् ।

सुप्रभ । तदवलोक्यैव मानसिंहः कोपस्फुरितहृदयः कश्चिकिनं प्रत्यवोचत् । ब्रूहि गर्विं निर्बोधं प्रतापम्—

यद्यमुष्य प्रतीकारं न कुर्य्यां वीर्य्यवानपि ।
तदाम्बरं न यास्यामि यास्याम्यम्बरतां पुनः ॥१५॥

अत्रान्तरे खल्वन्तरालात् काचिदुक्तिरश्रूयत—"त्वदीये-

नावृत्तेन सममेवागन्तव्यम्" इति। तदाकर्ण्यन्नेव च मानसिंहो झटिति राजभवनान्निर्गत्य तुरङ्गमारूढ़ो निरर्गलं चलितः।

शान्ति। भवतु। किमारम्भः सम्प्रति मिवारराजः?

सुप्रभ। स तु ततः प्रभृत्येव नवनवदुर्गनिर्म्माणम्, पुरातन-दुर्गसंस्कारम्, समरसम्भारायोजनम्, सेना-सेनाङ्गानाञ्च संग्रहं नक्तन्दिवमेव विदधाति।

शान्ति। घटनाक्रमेण तत् सर्व्वं सर्व्वथैवोपपद्यते।

सुप्रभ। तद्भवन्तोऽपि परीक्षितगुणान् ब्राह्मणानुपानीय समीचीनस्वस्त्ययने व्याप्रियन्ताम्।

शान्ति। वाढ़म्।

इति निष्क्रान्तौ।

—०—

विष्कम्भकः।

——ः०ः——

ततः प्रविशति कालीशैलसन्निहित-कालीमन्दिराङ्गने
यथासम्भव-सशस्त्र-सामन्त-सेनानी-सैनिकसमेतः
प्रतापसिंहः।

प्रताप। (सविस्मयामर्षक्षोभम्) नन्वेतावानधःपातः सञ्जातो मानसिंहस्य। यतः खल्वयम्—

जातिं धर्म्मं कुलगुणधनं भूयसीं जन्मभूमिं
मानञ्चालं यवनचरणे निर्व्विवादं समर्प्य।
वृत्तिं गृह्णन् मुदितहृदयः सेवते श्वेव नित्यं
स्वस्थं क्षत्रं वदति च पुनर्गर्व्विनिर्बोधमन्यम् ॥१८॥

सामन्तः शम्भुसिंहः। न केवलं मानसिंहस्य, अपि त्वेकं भवन्तमन्तरेण प्रायेण सर्व्वेषामेव राजपुत्रराजाना-मेतादृशी दशा संवृत्ता। तेन च क्षत्रियजातेरीदृशं पूर्व्वापर-वैषम्यं विशेषविषादविस्मयावहं मानवमात्रस्य। तथाहि—

जात्युत्कर्षं लिप्समानः सिषेवे
विश्वामित्रो दीर्घकालं तपांसि।
जात्यादीनां ध्वंसमुत्प्रेक्षमाणः
क्षत्रव्यूहः सेवते तुर्किपादम् ॥१९॥

सेनानी रणजित्सेनः। जातिः खलु सर्व्वथा शीर्षवर्त्तिनी मानवानाम्। येन हि—

भवत्यसौ दुष्करया तपस्यया
व्यतिक्रमादल्पतराच्चगुता भवेत्।

गता न लभ्या बहु चेष्टयापि वा
सती च जातिश्च समानगौरवा ॥१८॥

ताामीदृशीं जातिं पातयतः सुतरां सिद्ध एव जातिमतः पातः।।

मन्त्री भीमसिंहः। धर्म्मः पुनरसाधारणो बन्धुर्मानवमात्रस्य। तथा च—

ननु धनमिह लोके लाकमुच्चीकरोति
नहि खलु परलोकं याति लोकेन साकम्।
सुकृतमुभयलोके तूच्चताहेतुरुच्चैः
व्रजति च परलोकं सार्थिभावेन शश्वत् ॥१८॥

तमित्थम्भूतं धर्म्मं नाशयतः सर्व्वथा सर्व्वनाश एव सम्पद्यते।

प्रताप। वीरधुरीणाः! पश्यन्तु भवन्तः—

जन्तूनां जनयन्ति मातुरुचिता देहानि देहार्णवः
मृत्यौ प्रत्युपयान्ति नैव जननीदेहेषु तेऽमी पुनः।
एषां जन्मनि जन्मभूमिकणिकास्त्वायान्ति मृत्यौ पुन-
स्तत्रैव प्रतियान्ति तेन हि गुरुर्मातुः परा जन्मभूः ॥२०॥

अपि च।

धत्ते मा दशमासमात्रमुदरे त्वाजीवनं जन्मभूः
स्तन्यं यच्छति सा समाद्वयमियं भक्ष्यं चिरायाङ्गजम्।
बालेन प्रहृतेव सा प्रहरते सैषा तु सर्व्वंसहा
मातुर्भूमिरनेकधा गुरुतरा तेनातिमातोच्यते ॥२१॥

(सरोषम्) धिक्, तां खलु विद्विषतां जाल्मानां नामापि कल्मषकारणमेव मन्तव्यम्।

शम्भु। युक्तिमतीयमुक्तिर्देवस्य। उक्तञ्चार्षैः—"कथापि खलु पापानामलमश्रेयसे यतः।" हन्त! तामिताद्दशीमतिमातरं जन्मभूमिं राजन्यजन्मान एवाभिद्रुह्यन्ति। विशेषतश्च जयपुर-योधपुर-विकानीर-गोयालियर-पातियालादि-राज्यानामधिराजा बहुसंख्या एव संख्ये यवनशक्तिमेव जाल्माः पूरयिष्यन्ति।

रणजित्। अकिञ्चित्करं संख्याधिक्यममीषाम्। येन हि—

एकः सूर्य्यः क्षपयतितरामन्धकारानन्नतान्
सिंहश्चैको दलति गहने संहतान् भूरिजन्तून्।
एकः क्षत्रान् युधि सयवनान् संहरेदेष राजा
संख्याधिक्यं नहि खलु जयेत् सञ्जयेत् सार एव॥२२॥

प्रताप। (उक्तेषु कर्णमदत्त्वा गगने बद्धलक्ष्यः) दुरात्मन् मानसिंह! त्वं किल मत्कृतमपमानमसहमानस्तत्प्रतीकारं प्रतिजानानः प्रस्थितः। तत्त्वमपि यतस्व तावदस्मदुच्छेदाय, वयमपि यतिष्यामहे युष्मदुच्छेदेन चितोरोद्धाराय। पश्यामि तावत् कतरस्य यत्नः सफलतामुपेयादिति।

शम्भु। न वयं केवलान् यवनपदलिहानानुच्छिद्यैव विरमाम।

रणजित्। अपि तु यवनानपि भारताद्बहिर्विदधामिति वाक्यशेषः।

अश्व। बाढ़म्।

नेपथ्ये। कालि! कालि! कालि! दानवद्राविणि!

सर्व्वे। (आकर्ण्य सोल्लासमुद्ग्रीवञ्च पश्यन्ति)

अथ प्रविशन्ति कालीशैलादवतरन्तः सशस्त्रा भिल्लाः।

भिल्लाः। (अवतीर्य्य पुनस्तमेव मारध्वनिं कुर्व्वन्तो देवतां वीरसञ्चयञ्च प्रणम्य सशस्त्रक्षेपं नृत्यन्तो गायन्ति।)

महु महु महुरं सीहु सीहु णिअरं पिउ पिउ चउरं वीर!।
लहु लहु चरणं वहु वहु करणं संहर जवणं धीर!॥
करेहि जीवणपणं धरेहि णु पहरणं।
मारेहि जवणगणं पत्थरसमसरीर!॥ (क)

(नृत्यगीतान्ते भिल्लराजो रहुवारा भूमौ जानुयुगलं विन्यस्य प्रतापसिंहं प्रणमति।)

प्रताप। (रहुशिरसि हस्तं निधाय) भिल्लराज! स्वागतम्, सुखी चिरं जीव, ब्रूहि कल्याणं सर्व्वाङ्गीनम्।

रहु। भट्टारअ! तुह्माणं पसादेण अत्थि कल्लाणं सव्वाङ्गीणं। (ख)

---

(क) मधु मधु मधुरं सीधु सीधु निकरं पिव पिव चतुरं वीर!।
लघु लघु चरणं बहु बहु करणं संहर यवनं धीर!॥
कुरु जीवनपणं धर नु प्रहरणम्।
मारय यवनगणं प्रस्तरसमशरीर!॥

(ख) भट्टारक! युष्माकं प्रसादेन अस्ति कल्याणं सर्व्वाङ्गीनम्।

प्रताप। तत् किं देवताप्रणाम एव युष्माकमागमन-प्रयोजनम् ?

रहु। भट्टारअ! सुणिदं अह्मेहिं माणसिंहो आगदुअ तुए सह भोअणं पत्थअन्तो पच्चाक्खादो पडिस्सां अहिकहिअ पत्थिदो त्ति। ता जुद्धं सम्भाविअ तुह आस्सअलाहत्थं अह्मे आअदा। (ग)

सर्वे। (सानन्दं मारध्वनिं कुर्वन्ति।)

प्रताप। (सहर्षम्) साधु भिल्लराज! साधु। तदा तु युष्माभिराश्वातोतमुपकृता भविष्यामः।

भीम। हन्त! अनुकरणीयाः खल्वमी सभ्यम्मन्यैः। येन हि—

सुन्दरसरला प्रकृतिः निरतिशया खलु सत्यधर्म्मनिष्ठा।

अनाडम्बरस्य वेश एषणीयमेषां जीवनम् ॥२३॥

शम्भु। (सकौतुकम्) भिल्लराज! समानेऽपि सम्बन्धे मिवारपक्षपरिग्रहे को नाम युष्माकमाग्रहहेतुः?

रहु। जीवणं एक्कं एक्कस्य, जम्मभूमी तु सव्वस्स ज्जेव सिणेहट्ठाणं। (घ)

शम्भु। भिल्लराज! भवदाशयमपि धन्यं मन्ये। येन खल्वेतत्तात्पर्यपर्यवसायि ते वचनम्।

(ग) भट्टारक! श्रुतमस्माभिः—मानसिंह आगत्य त्वया सह भोजनं प्रार्थयन् प्रत्याख्यातः प्रतिज्ञामधिकृत्य प्रस्थित इति। तद्युद्धं सम्भाव्य तवाश्रयलाभार्थं वयमागताः।

(घ) जीवनमेकमेकस्य, जन्मभूमिस्तु सर्व्वस्यैव स्नेहस्थानम्।

स्वस्वजीवनदानेन रक्षणीयैव जन्मभूः ।
आदत्ते हि महद्वस्तु स्तोकत्यागेन बुद्धिमान् ॥२४॥

भीम । अथवायमेवास्य वचनार्थः—

प्रीतिः स्थानं भवति भुवने जीवनं व्यष्टिभूतं
तस्याः स्थानं निखिलनिलया जन्मभूमिः समष्टिः ।
आद्यात्यागे ह्रसति हि कियत् पूर्णरूपा द्वितीया
शेषात्यागे इयमपि चिरं हन्त ! नश्यत्यवश्यम् ॥२५॥

शम्भु । अतएवाघोषयन्ति तत्प्रीतिमन्तः सुरुन्तानाः—"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति ।

प्रताप । यदीदृगेव नाम जन्मभूमिः, तदा तस्याः परित्राणार्थमुद्धारार्थं वा सन्तानानां कतिविधः क्लेशः सहनीयः स्यात् ?

सर्व्व । सर्व्वविध एव ।

प्रताप । कियांस्त्यागो विधेयः ?

सर्व्व । प्राणपर्य्यन्तः ।

रघु । देहस्स सेसरत्तबिन्दुपज्जन्तो । (ङ)

प्रताप । तर्हि स्मरन्तु भवन्तः—ऋषिरपि परशुरामः प्रतिज्ञारूढ़ एव त्रिःसप्तकृत्वो राजन्यविनाशेन निष्ठुरतानिष्ठामनुष्ठापितवान्, भीष्मोऽपि प्रतिज्ञामाश्रयन्नेव राज्यवर्ज्जनपुरःसरं नैष्ठिकब्रह्मचर्य्यं पालयितुमलमासीत्; पार्थः

(ङ) देहस्य शेषरक्तबिन्दुपर्य्यन्तः ।

किलार्ज्जुनोऽपि च प्रतिज्ञागुणादेव रवेरस्तगमनात् पूर्व्वं जयद्रथमस्तं गमयितुमशक्नोत्। तेन च वयमपि तामेव प्रतिज्ञामाश्रयामः ।

सर्व्वे। उत्तमः प्रस्तावः ।

प्रताप। तदा खल्वेषा जगदम्बा जगदीश्वरा, अयञ्च क्षत्राणां जीवनसम्बलं तरवारिः, अस्याः समक्षम् इमञ्च स्पृष्ट्वा प्रतिजानतां भवन्तः ।

सर्व्वे। (जानुयुगलं भुवि विन्यस्य तरवारिञ्च स्पृष्ट्वा श्रेणीबद्धभावेन) सज्जीभूताः स्मः ।

प्रताप। (स्वयमपि तथा कृत्वा) चितोरोद्धारं यावत् सान्वया एव वयं प्रयोजने जायमाने समरे प्राणानपि प्रदास्यामः ।

सर्व्वे। वाढ़म् ।

प्रताप। भोजने पादपपत्रमाश्रयिष्याम ।

सर्वे। ओम् ।

प्रताप। तृणशय्यामधिगम्य यामिनीं यापयिष्यामः ।

सर्वे। सुदृढ़मेवाङ्गीकुर्म्महे ।

प्रताप। सर्व्वविधमेव वेशविलासं परिहरिष्यामः ।

सर्वे। ध्रुवमेवोररीकुर्म्मः ।

प्रताप। एकं प्रहरणसम्बन्धमन्तरेण सर्व्वं यवनसम्बन्धं वर्ज्जयिष्यामः ।

सर्वे। सत्यमभ्युपगच्छामः ।

प्रताप । (उत्थाय जगदम्बां प्रत्यञ्जलिं बध्नाति ।)

सर्वे । (उत्थाय तथैवाञ्जलिं बध्नन्ति ।)

प्रतापादयः सर्वे । (सभक्तिगद्गदम्) मातर्दानवमर्द्दिनि ! सर्व मङ्गले !

रामस्य भीष्मस्य धनञ्जयस्य च
यथा प्रतिज्ञा सफला कृता त्वया ।
तथा प्रतिज्ञां सफलां कुरुष्व नः
चिरञ्च भूयाः समरे सहायिनी ॥२६॥

(इति देवतां प्रणम्य निष्क्रान्ताः सर्वे ।)

—:०:—

प्रतिज्ञा नाम प्रथमोऽङ्कः ॥०॥

—— —— ० —— ——

# द्वितीयोऽङ्कः ।

——:००:——

अथ प्रविशति शिविकारूढ़ा कमला ।

कमला । (शिविकातोऽवतीर्य्य) अद्य सभावसानात् परं विश्रामभवनं गच्छन् वादसाहः स्वयमेव रहसि समाहूयार्य्यपुत्रमवोचत्—"राजन् ! अद्यतने सायंकाले विशाले सुसज्जिते चान्तःपुराङ्गने भविष्यति निषिद्धपुरुषप्रवेशा महती महिलामेला । तत्रागमिष्यति हिन्दुयवननिर्व्विशेषेण विलासिनीगणः, विचरिष्यति चासौ पण्यवीथिकासु हासकौतुककोलाहलेन क्रीणन् विक्रीणन् वा वस्तुजातम्, पुरस्करिष्यति च तं मन्महिषीगणः समागत्य रत्नालङ्कारवसनवितरणेन । तदद्य तामलङ्करिष्यति भवतोऽपि सहधर्म्मिणीति भवन्तमभ्यर्थये, मन्ये च सैव ग्रहीष्यति प्रथमं पुरस्कारमिति ।"

तदिदमाकर्ण्य पिशाचहासमिव यवनप्रणयं भयावहं मन्यमानामनिच्छन्तीमपि मामार्य्यपुत्रो बहुविधमाश्वासयन् प्रैषयदेव ; अहमप्यगत्यैवागच्छम् । येन हि—

सत्यं हि योषितः सत्याः पतिः परमदेवता ।
मन्यते तेन तद्वाचं वेदवाचमिव ध्रुवाम् ॥१॥

भवतु । सतीकुलदेवता सर्व्वमङ्गलैव सर्व्वथा शरणम् । (परिक्रम्य) हन्त ! सेयमिन्द्रप्रस्थनगरी । अत्र किल

कदाचिद्धर्म्मराजो राजसूयमन्वतिष्ठत्, इदानीञ्च विधर्म्मराजः प्रतिदिनं शतशतगवीहत्यामनुतिष्ठति ; पूर्वमीदृशे सायंसमये खल्वग्निहोत्रिणां होमधूमा गगनमण्डलमप्लावयन्, अधुना तु यवनहतानां गवामस्रस्रोतांसि भूतलं प्लावयन्ति। (विलोक्य) हन्त! रविरयमस्तं याति, उदेष्यति च पुनः प्रातः। हा भगवन्! यः किल हिन्दूनां गौरवरविरस्तं गतः, स किं पुनर्नोदीयात्? कथमुदीयात्? उदयहेतवः पुरुषा एव न सन्ति, ये च सन्ति, ते हि पुरुषनामानः शिलीमुखाः, यवनपदलेहिनः पुरुषकलङ्का वा। (स्मृत्वा सहर्षम्) अस्ति खलु पुरुषसिंहः प्रतापसिंहः। (विचिन्त्य सविषादम्) हन्त! स खल्वेकः, तत् किं हिन्दुगौरवमुद्धर्त्तुं प्रभवेत्? (साटोपम्) प्रभवेदेव। येन हि—

एकः स्फुलिङ्गो ग्रसते महावनं
रुद्रः किलैको धुनुते जगज्जनान्।
एको मरुत् पातयते च पादपान्
एकः प्रतापोऽपि तपेद्विधर्म्मिणः ॥२॥

(अञ्जलिं बद्ध्वा) मातर्दानवमर्द्दिनि! वितर प्रतापसिंहस्य भुजयोर्विपुलं बलं हृदये च महान्तमुत्साहम्।

(परिक्रम्य सौरभमनुभूय) अये! कुत इदमलौकिकं सौरभमनुभूयते? (उपसृत्य विलोक्य च) आं तदिदं श्रुतपूर्वं मनोहरमुद्यानं बादसाहस्य। (किञ्चित् प्रविश्य) हन्त! मणिमयाः पन्थानः, मरकतमयान्यालवालानि, पिच्छिल-

मणिवेदयो महामञ्जवः कुञ्जाः, विसर्पिसौरभाणि देवलोभनीयानि नानाविधकुसुमानि च परिदृश्यन्ते। हा धिक्, यद्यहममुष्य स्वामिन्यभविष्यम्, तर्हि खल्वन्तरान्तरा विल्वपादपान् तुलसीतरूंश्चारोपयिष्यम्; येनेष्टदेवतार्च्चना समीचीना सुकरा चाभविष्यत्।

किं तया पुष्पसम्पत्त्या या न पूजोपयोगिनी।
किं तया हि विलासिन्या या न पत्युर्मनोरमा ॥३॥

भवतु; पश्यामि तावत्—कियतीमुद्यानशोभासम्पदम्। अस्मि च वीरतनया गुप्तशस्त्रिका च; निषिद्धपुरुषप्रवेशश्चायं प्रदेशः। (परिक्रम्य विलोक्य च) अये! केयमवलाप्याकारसूचितमहाबला कर्कशमूर्त्तिरायाति? उद्यानपाली प्रतिहारिणी वा भवेत्; कथमसौ महिलामेलां न गच्छति? आं उद्यानरक्षार्थं न गता। (इति परिक्रामति।)

प्रविश्योद्यानपाली। अह्मो! का एषा एआइणी उज्जाणे परिब्भमदि? ता एषा रूवेण अवररूववदीणं पच्चादेसो ज्जेव। अच्छरा भविस्सदि, अच्छरावि महिलामेलादंसणणिमित्तं आअदा भवे। होदु दाव, उवगदुअ पुच्छेमि। (उपसृत्य) कां अत्तभोदीं अवअच्छामि? (क)

(क) अहो! का एषा एकाकिनी उद्याने परिभ्रमति? तदेषा रूपेणापररूपवतीनां प्रत्यादेश एव। अप्सरा भविष्यति, अप्सरापि महिलामेलादर्शननिमित्तम् आगता भवेत्। भवतु तावत्, उपसृत्य पृच्छामि। कामत्रभवतीमवगच्छामि।

कमला । क्षत्रियपुत्रीं क्षत्रियकलत्रञ्चावगच्छ ।

उद्यान । ता एआइणीए उज्जाणप्पवेसे हेदू ? (ख)

कमला । महिलामेलां गच्छन्ती प्रथममलौकिकसौरभेण निवर्त्तिता, परञ्चोद्यानशोभया प्रवेशिता । येन हि—

पुष्पकान्तिरतुलाससौरभा
शारदी शशधरस्य कौमुदी ।
माधुरी च गुणिगानसम्भवा
कं नु नो हरति सेन्द्रियं जनम् ? ॥४॥

उद्यान । अत्तणः सरिसी अङ्गणा अत्थि कधेहि । (ग)

कमला । (स्मितं करोति ।)

उद्यान । देवि ! भोदीए भत्तुणो णाम सुणिदुं इच्छेमि । (घ)

कमला । अये ! नाहं यवनी, येन ग्रहीष्यामि भर्त्तुर्नाम ।

उद्यान । सङ्केदेण भणाहि । (ङ)

कमला । बादशाहस्य सभाकविः ।

उद्यान । (सविस्मयसम्भ्रमम्) अह्मो ! भोदी क्खु पिथिराअमहिसी । (च)

---

(ख) तदेकाकिन्या उद्यानप्रवेशे हेतुः ?

(ग) आत्मनः सदृशी अङ्गना अस्ति कथय ।

(घ) देवि ! भवत्या भर्त्तुर्नाम श्रोतुमिच्छामि ।

(ङ) सङ्केतेन भण ।

(च) अहो ! भवती खलु पृथ्वीराजमहिषी ।

कमला । अथकिम् ।

उद्यान । ता किं भोदी सग्रं आग्रदा ? (छ)

कमला । न खलु । एतदर्थं स्वयं वादसाहेनैवाभ्यर्थितः सभाकविः ।

उद्यान । जुज्जदि, तुमं एरिसो त्ति कदूग्र सग्रं वादसाहो ज्जेव ग्रब्भत्थेदि । (स्वगतम्) ता एरिसं इत्थिग्रारदणं जइ वादसाहस्स ग्रप्पिदुं पारेमि, तहिं मिच्चुपज्जन्तं ग्रत्थचिन्तादो णिवित्तिं लहिस्सामि । तेण ग्र एत्थ मए जदनो करणिज्जो । (ज)

कमला । नन्वितः कियद्दूरे महिलामेला ?

उद्यान । मा चिन्तेहि, ग्रहं ज्जेव भोदीं महिलामेलां वादसाहं ग्र दंसइस्सामि । (झ)

कमला । (विरक्तिमभिनीय) धिक्, वादसाहदर्शनेन किं प्रयोजनम् ?

उद्यान । देवि ! ग्रणेग्राग्रो ज्जेव महिलाग्रो तं पत्थेन्ति । (ञ)

---

(छ) तत् किं भवती स्वयमागता ?

(ज) युज्यते, त्वमीदृशीति कृत्वा स्वयं वादसाह एव अभ्यर्थयते । तदीदृशं स्त्रीरत्नं यदि वादसाहस्यार्पयितुं पारयामि, तदा मृत्युपर्य्यन्तम् अर्थचिन्तातो निवृत्तिं लप्स्ये । तेन चात्र मया यत्नः करणीयः ।

(झ) मा चिन्तय, अहमेव भवतीं महिलामेलां वादसाहञ्च दर्शयिष्यामि ।

कमला । अथ श्रूयते—महिलामेला निषिद्धपुरुषप्रवेशेति । तत् कथं तत्र बादसाहः प्रविशति ? तत् किमसौ न पुरुषः ?

उद्यान । स ण पुरिसो, किन्तु महापुरिसो ज्जेव । ता तस्स पवेसे ण दोसो । (ट)

कमला । तर्हि यज्ञवाटे महाकुक्कुरप्रवेशेऽपि न दोषः ?

उद्यान । ण जुज्जति भोदीए एरिसं भणिदुं । (ठ)

कमला । तद्ब्रूहि बादसाहदर्शने किं प्रयोजनम् ?

उद्यान । अलोइओ सुहसम्भोओ अदिट्टउव्वो पुरक्कारो अ । (ड)

नेपथ्ये गायति ।

हे मधुप ! हे मधुप !

विचरसि किं न पतसि किं न पिबसि किं मधुप !

गुणगुणमालप ।

चलति मलयपवनो विधुतकुसुमकाननो

नवे वने नवो रव एति पिकजो रसय ! ॥

उद्यान । देवि ! पेक्ख महिलास्रेणी तहिं ज्जेव गाअन्ती गच्छदि । ता तुमं वि चल, तुमं ज्जेव पढमं पुरक्कारं लहिस्ससि । (ढ)

---

(ञ) भवति ! अनेका एव महिलास्तं प्रार्थयन्ते ।

(ट) स न पुरुषः, किन्तु महापुरुष एव । तत्तस्य प्रवेशे न दोषः ।

(ठ) न युज्यते भवत्या ईदृशं भणितुम् ।

(ड) अलौकिकः सुखसम्भोगः अदृष्टपूर्वः पुरस्कारश्च ।

कमला। (स्वगतं सोद्वेगञ्च) तदिदमुपस्थितमाशङ्कितचरं दुर्ज्ञातम्। तदितो निष्कृतिं दुष्करामेव मन्ये। भवतु, इदानीमस्याः प्रलोभनमेव प्रथमो निष्कृतेः पन्थाः। (प्रकाशम्) सखि! उद्यानपालिके! त्वां पुरस्कर्त्तुमिच्छामि।

उद्यान। केण कज्जेण। (ण)

कमला। अवाधमविलम्बञ्च मे स्वभवनप्रेषणेन।

उद्यान। एसा ज्जेव आअदा, एषा ज्जेव जास्सदि? (त)

कमला। सखि! आकस्मिको मां बाधते शिरःपीड़ा।

उद्यान। हला! सुसमामईं मेलां मह्मिममअं मेलाणाअअञ्च ण पेक्खिस्सदि? (थ)

कमला। सखि! यात्रान्तरे प्रेक्षिष्ये। येन हि—

रुजया विकले कलेवरे प्रमदो नैव पदं प्रपद्यते।
मरुता विधुते तरोर्दले विगलत्येव हि निष्पतन्मधु ॥५॥

उद्यान। सहि! तहिं गदाए ज्जेव तुह पीड़ा उवसमं गमिस्सदि। जेण क्खु—

---

(ढ) देवि! प्रेक्षस्व, मह्मिलाश्रेणी तस्यामेव गायन्ती गच्छति। तत्त्वमपि चल, त्वमेव प्रथमं पुरस्कारं लप्स्यसे।

(ण) केन कार्य्येण?

(त) एषैवागता, एषैव यास्यति?

(थ) हला! सुषमामयीं मेलां मह्मिमयं मेलानायकञ्च न प्रेक्षिष्यसे?

पुप्फमई सुहसज्जा अदिट्ठउव्वा विलाससामग्गी ।
पुरिसो वि लोहणिज्जो महोसहं युवदिरोअस्स ॥६॥ (द)

कमला । (सरोषम्) धिगिमामात्मौपम्येनोक्तिम् ।

मृत्युमेव वृणुते वरं सती
नाङ्गमर्पयति पूरुषे परे ।
जाह्नवी पथि विशुष्यति क्वचित्
सिन्धुगा न तु नदान्तरं व्रजेत् ॥८॥

उदयान । (स्वगतम्) जइ क्खु इमं परिच्चआमि, तहिं इमाए पुरक्कारे अप्पो लाहो, विदिदवुत्तन्तस्स वादसाहस्स तु महन्तो ज्जेव तिरक्कारो गुरुओ दण्डो वा भविस्सदि । वादसाहस्स अप्पणे तु आसाणुरुवो ज्जेव पुरक्कारो भवे । ता तदत्थं ज्जेव मए जदणिज्जं । (प्रकाशम्) सहि ! जइ अहं दाव तुमं ण परिच्चयामि । (ध)

---

(द) सखि । तस्यां गतायां एव तव पीड़ा उपशमं गमिष्यति । येन खलु—

पुष्पमयी सुखशय्या अदृष्टपूर्व्वा विलाससामग्री ।
पुरुषोऽपि लोभनीयो महौषधं युवतिरोगस्य ॥६॥

(ध) यदि खल्विमां परित्यजामि, तदा अस्याः पुरस्कारे अल्पो लाभः, विदितवृत्तान्तस्य वादसाहस्य तु महानेव तिरस्कारो गुरुको दण्डो वा भविष्यति । वादसाहस्य अर्पणे तु आशानुरूप एव पुरस्कारो भवेत् । तत्तदर्थमेव मया यतनीयम् । सखि ! यद्यहं तावत् त्वां न परित्यजामि ।

कमला। अये! कः खलु मां रोद्‌धुमोश्वरः? जानासि न,

सुरधुनीं गिरिगह्वरभेदिनीं
जलनिधिं प्रति यानपरायणाम्।
नहि गिरीश्वरशक्तिरपि क्षमा
पथि निरोद्धुमवार्य्यजवान्विताम्॥८॥

उद्यान। सहि! णं कधेमि, मा दाव अत्तसुहविमुही होहि। (न)

कमला। (सरोषम्) आः पापे! पुनरपि पापप्रस्तावः।

उद्यान। (सहासम्) वालिए! ता किं विभावेसि एत्थ वि तुमं साहीणा त्ति? (प)

कमला। (साटोपम्) कः सन्देहः। अरे!

आर्य्या सती वह्निशिखासमाना
तृणोपमाना यवनी किल त्वम्।
तत् कुट्टनीह प्रसभप्रवृत्ते-
र्द्रुतं निवर्त्तस्व जिजीविषुश्चेत्॥९॥

(इति भर्त्सीं निष्काशयति)

उद्यान। (स्वगतम्) एआइणी ण पारेमि। ता वेएरवेण अस्साओ आमन्तेमि। (प्रकाशम्) ता चिट्ठ तुमं। (इति वंशीमानेतुमुद्यानद्वारगृहान्तरं प्रविशति।) (फ)

(न) सखि! ननु कथयामि—मा तावदात्मसुखविमुखी भव।

(प) वालिके! तत् किं विभावयसि अत्रापि त्वं स्वाधीनेति?

कमला । (द्रुतं गत्वा तत्कपाटयुगलं संयोज्य वह्रिरर्गलेन रुणद्धि ।)

उद्यान । (अन्तर्गृहादेव) बालिसे ! मिच्चुमुहं पविससि । (ब)

कमला । कुट्टनि ! चिरं निरयनिवासमावस । (इति द्रुतमुद्यानद्वारं गच्छति ।)

अत्रान्तरे वाहिकाः नारीं काञ्चिदवतार्य्य शून्यां शिविका-मादाय तद्द्वारसम्मुखमार्गेण गच्छन्ति ।

कमला । (विलोक्य द्रुतमुपसृत्य) अये ! क्षिप्रमवतार्य्यतां शिविका ।

वाहिकाः । (शिविकामवतार्य्य) अम्हे कहिं गच्छम्ह ? (भ)

कमला । (शिविकामारोहन्ती क्षुद्रपथं प्रदर्श्य) अमुना वर्त्मना द्रुतं निःशब्दञ्च सभाकवेर्भवनम् । (इत्यारोहति)

वाहिकाः स्कन्धेषु शिविकामुत्तोल्य धावन्ति ।

इति निष्क्रान्ताः सर्व्वे ।

---

## इति कमलाकौशलं नाम द्वितीयोऽङ्कः ॥०॥

---

(फ) एकाकिनी न पारयामि । तद्द गुरवेश्या अन्या आमन्त्रयामि । तत् तिष्ठ त्वम् ।

(ब) बालिशे ! मृत्युमुखं प्रविशसि ।

(भ) वयं कस्मिन् गच्छामः ?

# तृतीयोऽङ्कः।

——:o:——

अथ प्रविशति मन्त्रणाभवने सचिन्तो वादसाहः।

वाद। (परिक्रामन्) हन्त! प्रायेणैवायथार्थो लोकवादः। तथा च दीनतो धनी, धनितो राजा, राजतश्च सम्राट् सुखीति स्वप्रत्ययमात्रवर्त्तिनो लोका वदन्ति। अनुसन्दधानास्तु निपुणं परीक्षमाणा विचक्षणाः सर्व्वथैवामुं मतवादं प्रत्याचक्षाणा एतत्प्रातिलोम्येनैव सुखं समर्थयन्ते। अहं पुनरेकं सन्न्यासिनमेव, सुतरां सुखास्पदं मन्ये।
येन हि— यावतीह गृहिणो धनसम्प-
त्तावती ध्रुवममुष्य हि चिन्ता।
चिन्तयातिविकले किल लोके
शान्तिमन्नहि सुखं समुपैति ॥१॥

विशेषतस्तु भारतसम्राट् कदापि सुखं शान्तिं वा नाशास्ते। तथा च—

नानाजाति-वचोवर्ण-धर्म्मवेशास्पदं बृहत्।
एकं हि भारतं मन्ये द्वितीयां पृथिवीमिव ॥२॥

तेन च गोवधविधाने तीव्रमुन्मादयति रोषेणार्य्यः, नितरां नृत्यति तोषेण यवनः, गोवधनिषेधे तु तुष्यति हिन्दुः, रुष्यति मुसलमानः। एष चोभयोरेवार्य्य-यवनसमाजयोर्जातिगत-

तीव्रविद्वेषप्रसूतो विषमः स्वभावः । तथा चार्य्याणां धर्म्मशास्त्र एव मधुपर्के गोवधो विधिबद्धः, महाकविर्भवभूतिश्चोत्तररामचरिते तथैवोदाजहार ; गोमेधो नाम यज्ञश्चासीत् । राजा रन्तिदेवश्च यागहतानां गवामस्रस्रोतसा चर्म्मण्वतीं नामैकां सरितमेव प्रवर्त्तयामास इत्यादिकं श्रूयते । अथ चाधुना गोवधं शृण्वन्त एवामर्षणोन्मादयन्ति । यवनाश्च गवेतरेषां पशूनां विशसनेनैव पिशितपिपासां पूरयितुं पारयन्तोऽपि गा एवालभन्ते । अपि चार्य्या भगवतश्चिन्मयतया निराकारतां सिद्धान्तयन्ति निर्म्मिमते च मूर्त्तिमर्च्चयन्ति च तामेव ; यवनाश्च भगवतो व्यापित्वमङ्गीकुर्व्वन्ति धावन्ति च मक्काम् ।

तदीदृशान् सिद्धान्तविरुद्धानाचारानालोचयन् भयसमाज एवोभयं समाजमुपहसति निन्दति विवदते च । अतएवामीषामुभयेषामेव सामञ्जस्यमञ्जसा विधातुकामेन मया राजकार्य्ये महासभायाञ्च प्रायेण समानसंख्ययैव विन्यस्ता हिन्दुमुसलमाना मौलभीपण्डिताश्च ; शोणितसंक्रमणाय चोपक्रान्तो यौनः सम्बन्धः ; महिलानां मेलनाय च मे जन्मदिवसे कल्पिता महिलामेला । (स्मृत्वा सलज्जम्) तत्र चोद्यानपालो कमलासंलापे मदभिधानमभिदधाना नितरामेव प्रमादयति स्म । यातु तावत्, परोक्षे परसंलापे न खलु मे दोषलेशावकाशः । अथ चैतदेव हि दुष्कर्म्मणः फलम्—

न शङ्कते यद्यपि दण्डमात्मन-
स्तथाप्यसावुद्विजते च लज्जते ।

निजे च धर्म्मे परगुप्तमन्विते
न शान्तिमाप्नोति च दुष्क्रियो जनः ॥३॥

आस्तां तावत् । इदं नाम भारतं वर्षं चिरमेव हिन्दूनां स्थानमिति हिन्दुस्थानमाख्यायते ; अद्यापि च हिन्दव एव संख्यया भूयांसो गुणेन गरीयांसः सम्पदा च महीयांसः ; तथापि तु धर्म्मे विश्लथ इत्येकतापरिहीनाः । तथा च—

जनानां योजकं धर्म्मं सूत्रं सुमनसामिव ।
धर्म्माभावे तु भिद्यन्ते सूत्राभावे च ता इव ॥४॥

अत एवामी विजिताः, यवनाश्च विजेतारः संवृत्ताः । अथवा नानाकुसुमानां मधूनि मधुचक्रेष्विव हिन्दूनां धर्म्माणि मधुसूदनसरस्वती-तुलसीदासादिषु पुञ्जीभूतानीव सञ्जातानि । अत एवामी नितरामिव मे श्रद्धामादधाना धर्म्माचार्य्यतायां स्थापिताः, वीरधुरीणा मानसिंहादयश्च सुतरामेव विश्वासमासादयन्तः सेनानायकतायां नियुक्ताः । अनेनैव च हेतुना मुसलमाना मां हिन्दुम्मन्यमेव मन्यन्ते रहसि हसन्ति निन्दन्ति च । तथापि चाहमिमां साधीयसीं नीतिं न परिहरामि । भवतु तावत्, (विचिन्त्य) तत् कथं चिरयति मानसिंहः—

सिंहः सिंहेन युक्तो वा वियुक्तो वा हतोऽपि वा ।
(इत्युच्चारयन्नेव ससम्भ्रमम्)
नाशङ्क्यमीदृगन्याय्यं प्रतापे तु प्रतापिनि ॥५॥

(दृष्ट्वा) हन्तायमागच्छति मानसिंहः । (विशेषेणावलोक्य सोद्वेगम्) किमेतत्—

म्लानं मुखं हृदयदुःखमलं व्यनक्ति
रोषानलं मनसि शंसति तीव्रदृष्टिः।
आबद्धमुष्टिरपि वक्ति दृढ़प्रतिज्ञां
तस्मादभूद्विषमदुर्घटनैव कापि ॥६॥

प्रविश्य मानसिंहः। (उष्णीषमवतार्य्याभिवादयते।)

वाद। ( प्रत्यभिवाद्योपविश्य च ) ननु क्रियतामासन-ग्रहणम्।

मान। ( सामर्षक्षोभम् ) साम्प्रतं भद्रासनं ममासन-ग्रहणमसाम्प्रतमेव।

वाद। [सोत्कण्ठम्] हेतुमत्रावगन्तुमिच्छामि।

मान। [सक्षोभम् ]

सौहृद्यं घटयितुकाम एव गत्वा
दौर्हृद्यं समघटयं नितान्ततीव्रम्।
न्यक्कारं समधिगतस्तथा किलाहं
चाण्डालो मलवहनो यथापि वा श्वा ॥७॥

वाद। (सौत्सुक्यम्) किं नु नाम संवृत्तम्?

मान। (सवैधुर्य्यमामूलं कर्णे कथयति।)

वाद। (सक्रोधाभिनयम्) अहह! दारुणो व्यवहारः। पतङ्गस्य पावके पादप्रहारः, फेरोः केशरिणः केशाकर्षणम्, मूषिकस्य च करीन्द्रास्कन्दनम्। (स्वगतं सहर्षम) सिद्धं नः समीहितम्।

मान। तदानीञ्च मे—

परया घृणया तया रिपोरपमानेन विशङ्कटेन च ।
प्रतिलोमविलादिबोदगुर्भृशकोपानलविन्दवो द्रुतम् ॥८॥

वाद। ततो भवतोऽप्याचरणं श्रोतुमिच्छामि ।

मान। ततः कच्छ्रुकिनमश्रावयं मत्प्रतिज्ञाम् ।

वाद। कीदृशीं नाम ?

मान। (साटोपम्)

यद्यमुष्य प्रतीकारं न कुर्य्यां वीर्य्यवानपि ।
तदाम्बरं न यास्यामि यास्याम्यम्बरतां पुनः ॥९॥

वाद। साधु कृतम्। आचारोचिता समीचीना चेयं प्रतिज्ञा।

मान। तदिदानीं किं नाम विधेयम् ?

वाद। अत्र तावद्भवदिच्छैव सर्व्वथा प्रमाणम् ।

मान। (सगर्व्वम्) श्रूयतां तर्हि—

मिवारजयमग्रतः कमलमीरसंलुण्ठनं
प्रतापधृतिमानयं प्रसभमस्य दिल्लीपुरे ।
समं मुसलमानकैः सदसि भोजनं तस्य च
क्रमेण करवाण्यहं तव समेत्य साहायकम् ॥१०॥

वाद। भवादृशि वीरधौरेये सर्व्वमिवेदं सम्भाव्यते। अहो! विस्मृतं मयैतज्जिज्ञासितुम्। तस्मिन् दुर्व्यवहारे कस्यापि कोऽपि प्रतिवादो नासीत् ?

मान। कच्छ्रुकिमुखादश्रौषम्—अनुजः शक्तसिंहः खलु

प्रतिवदन्नग्रजेन प्रतापेन निराकृतस्तिरस्कृतश्च गृहान्तरं गत इति।

वाद। (सहर्षम्) तर्हि तेन विभीषणक्रिया कारयितव्या।

मान। अत्रास्ति गरीयान् संशयः। येन हि—

एकशोणितसम्बन्धः कथमन्यां क्रियां क्रियात्।
पद्मयोर्भिन्नगन्धित्वं नैककासारजातयोः॥११॥

आस्तां तावत्। तथाप्येकः शक्तसिंहः किमधिकं कर्त्तुं शक्तो भवेत्?

बहौ हि सिंहे हरिणः किलैक-
स्तेषां बलं नाभ्यधिकं विदध्यात्।
गतेषु चास्मासु स शक्तसिंहः
शक्तोऽप्यशक्तो भवितैव बाढ़म्॥१२॥

वाद। अथाधिगतं भवता कियती सैन्यसंख्या प्रतापस्येति।

मान। पञ्चाशत्सहस्रपर्य्यन्ता। तेन च द्विलक्षसैन्योपपन्ने मयि सागरे सरिदिव सा लयं यास्यति।

वाद। मा मैवम्।

आक्रान्तः प्राणरक्षार्थमाक्रान्ता तद्ग्रहाय तु।
युध्यते युधि तेनाद्यो दुर्ब्बलोऽपि बलीयते॥१३॥

मान। युक्तिरियं शतश एव प्रत्यक्षसिद्धा वादसाहस्य। किन्त्वितश्च चतुरङ्गिनी चतुर्गुणा च वाहिन्यस्माकमित्यपि विवेक्तव्यम्।

वाद। बाढ़म्। (स्वगतम्) एष खलु मानसिंहो हिन्दुः क्षत्रियो राजपुतः सूर्य्यवंशीयश्चेति चतुर्द्धा सम्पृक्तः प्रतापसिंहेन, अस्माभिस्तु वेतनमात्रेण। ततश्च नितान्तदुर्व्यवहारादिदानीं कोपेनोन्माद्यति; कदाचित् सद्व्यवहारात्तु सन्तोषेण प्रीयेतापि। विशेषतश्च स्वजातिविश्लिष्टस्य विजातिसंश्लेषः संशयास्पदमेव। अथवा खल्वीदृशस्यास्थैर्य्यमेव स्वाभाविकम्। तथा च—वृन्तान्निपतितं पुष्पमावर्त्ते परिघूर्णते।

स्रोतसा नीयमानन्तु पुनरन्यत्र गच्छति ॥१४॥

एवञ्चास्माकं विषमावस्थैवोपस्थिता भवेत्। तदेतदेवात्र प्राप्तकालम्। (प्रकाशम्) अम्बरपते! वत्सः सेलिमः प्रायेणैवोत्साहेन युयुत्सां प्रज्ञापयति। तस्मिन् वयश्च सञ्जातं प्रतापप्रकाशस्य। ततस्तमत्रभवतः सहचरीकर्त्तुमिच्छामि।

मान। (साशङ्कम्) सेनापतितया तदधीनतया वा?

वाद। नवीनस्य सैनापत्यं सर्व्वथैव विपदो मूलमिति सेनापतेर्भवत एवाधीनतया।

मान। (सहर्षम्) सर्व्वथा न्यायानुवर्त्तिनो बुद्धो राजराजेश्वरस्य। तदेतदेवास्तु।

वाद। दौवारिक!

प्रविश्य दौवारिकः। आणवेदु देवो। (क)

वाद। कुमारं द्रष्टुमिच्छामि।

दौवा। तह। (ख)

---

(क) आज्ञापयतु देवः। (ख) तथा।

(इति निष्क्रम्य पुनः सेलिमेन सह प्रविशति ।)

सेलिमः । (स्वजातिरीत्या बादसाहमभिवादयते ।)

बाद । वत्स ! चिरञ्जीवी भूयाः । (इङ्गितेनोपवेष्टुमनुमोदते ।)

सेलिमः । (उपविशति ।)

बाद । आयुष्मन् ! प्रायेणैव वितृष्णोपि समरलालसाम्, वयश्चेदं ते प्रतापमारोपयितुम्, समयश्च समायातस्तस्य ।

सेलिमः । कथमिव ?

बाद । तत्रभवतो मानसिंहस्य शोलापुरविजययात्रावसरे सम्भावयता मयैवोपदिष्टम्—महाराज ! भवता खल्ववश्यमेव जेष्यते शोलापुरम् । तज्जयानन्दवाहिना च मिवारानागत्य प्रतापसिंहेन सह सन्धिवन्धनानन्दमपि वहता समागन्तव्यमिति । गतश्च तत्र महाराजेन । ततश्च प्रतापेन महामानस्थाने नितरामपमानः प्रयुक्तो मानसिंहस्य ।

सेलिमः । (सोत्कण्ठम्) कीदृशः खल्वसौ ?

बाद । (सेलिमं प्रति स्वैरं कथयति ।)

सेलिमः । (सरोषम्) अहह ! गरीयानत्याचारः ।

बाद । मानेऽपमानो मम दुःसहो भृशं
परं प्रतापोऽप्युपचीयते श्रुतम् ।
रिपुश्च रोगश्च विवृद्धिमान् क्रमात्
नोपेक्षणीयो हि विपश्चितश्चिरम् ॥१५॥

सेलिमः । तदस्य गर्व्विणो दमनं सर्व्वथा प्राप्तकालम् ।

वाद। तर्हि तु प्रतापं प्रति प्रयाणे श्रीमन्तमम्बरपतेः सहचरीकर्त्तुमिच्छामि।

सेलिमः। स्वाधीनतया ?

वाद। पराधीनतया, नवीनः खल्वायुष्मान्।

सेलिमः। महास्वाधीनसूनोः पराधीनतां युक्तां मन्यते सम्राट्। तथा च—

सत्त्वानुवर्त्तनरता चलिता च शश्वत्
मूर्द्धानमुन्नमयितुं नियतं न शक्ता।
दृष्टे स्वयञ्च न पुनः चमताप्रकाशे
स्रोतोगता मृदुलता परनिघ्नता च ॥१६॥

वाद। (आकर्ण्य विचिन्त्य) भवतु। आयुष्मन्! आगच्छ, पश्यावस्तावन्मिवारमानचित्रं तत्प्रवेशमार्गं समरोचितं प्रदेशञ्च। (इति मिवारमानचित्रमादत्ते।)

सेलिमः। सर्व्वथा युक्ततमं खल्वेतत्। (इत्युपसर्पति।)

उभौ। मिवारमानचित्रं पश्यतः।

मान। (स्वगतं सखेदम्) इतः कुमारः कामयते न पराधीनताम्, इतश्च मयापि विवेक्तव्यम्; सैनापत्ये स्वहस्तेन स्वजनसंहारः, स्वेनैव स्वजातिद्रोहः, आत्मनैव चात्मन एव जन्मभूमेः परस्मै प्रदानम्। धिक्, इयं खल्वनिर्व्वचनीया नृशंसता। हन्त! पापीयसी नृशंसस्य मे निरयेऽपि न स्थानम्। अहोवत! यवनेन कन्यायाः पाणिं ग्राहयता तातेनैव लुप्तो जातिधर्म्मः मया च राज्यविसर्ज्जनेनार्जितं

प्रजात्वम्, शाश्वतस्वाधीनताविनिमयेन क्रीता चिरन्तनी पराधीनता, प्रभुत्वप्रदानेनादत्तं दासत्वम्, जगत्सम्मानित-तेजस्वितापरिवर्त्तनेन च गृहीता जगद्गर्हिता कातरता। साधु, चमत्कारिणी मनीषा मानसिंहस्य।

धीरस्य धीरुभयलोकसमृद्धिहेतु-
र्मूढ़स्य सा तदुभयस्य तु पातवीजम्।
नारी सती हि पतिमुन्नयते द्युलोकं
सा त्वेव पातयति तं निरये स्वपापात् ॥१७॥

(सोन्मादमिव) मानसिंह! मानसिंह! अथवा अन्ये पद्मलोचननामेव नितरामपमानिनि मानपदमनन्वयमेव; धराधुराविरहे चतुर्धुरीणोपाधिरिव च नितान्तकातरे सिंहोपाधिरपि सर्व्वथैवार्थशून्यः। एवं हि लुप्तमेव मानसिंहाभिधानम्, प्रवृत्तञ्च सार्थकं शिलीमुखापसदेत्यभि-धानम्। (विचिन्त्य) हन्त! त्रेतायां रावणं विरुन्धता राममाश्रयता च विभीषणेनायमाविष्कृतः पन्थाः, द्वापरे पाण्डवान् परिहरता सुयोधनं भजता च कर्णेनासौ विवर्द्धितः, कलौ च पृथ्वीराजं वर्ज्जयता महम्मदञ्च गृह्णता जयचन्द्रेण चोज्ज्वलीकृतः। हा धिक्—

हिन्दुरेव हि हिन्दूनां विकृतः कुरुते क्षतिम्।
मुद्गरीकृतलौहं हि लौहं दलति शाश्वतम् ॥१८॥

तदत्र धर्म्मशैथिल्यमेवाद्वितीयं कारणमिति निष्प्रतिवादः प्रवादः। कष्टम्, अधन्यस्य मे नास्तीदानीं प्रतिनिवृत्तेरपि

पन्थाः। कर्णः किल कुन्तीकृष्णयोरनुरोधेऽपि कृतघ्नता-कर्षणाद्दुर्य्योधनं न परिजहार। इतस्तु परापराधेन परापकारः सुतरामन्याय्यः। एष च पराधीनतायाः स्वभावः, यत् प्रभोरधीनतायां तत्प्रतिनिध्यादेरप्यधीनतेति। ममापि तथैवास्ताम्। "पापात्मनां पापशतेन किं वा।" (प्रकाशम्) तदस्तु तावत् कुमारस्यैव सैनापत्यम्।

वाद। अत्र महाराजः किं नाम युक्तरूपं मन्यते?

मान। राजराजेश्वर! कुमारः खलु युवा। तेन च—

उद्यमो वयसि यौवने यथा प्रौढ़वृद्धवयसोर्न तादृशः।
आदितो भवति यादृशो जवः शेषतस्तु न तथा खधूपजः॥१८॥

वाद। तदा त्वत्रभवता चाजयसिंहेन च सततमेवायुष्मतो मन्त्रणायामवधातव्यम्।

मान। उत्तमः कल्पः।

सेलिमः। सर्व्वथा समीचीन एवायं नियोगः सार्व्वभौमस्य। तदचिरादेव भवन्तः प्रत्यक्षीकरिष्यन्ति—

पूर्व्वं जेष्यन् समरशिरसि क्षत्रियान् मुष्टिमेयान्
शेषं यास्यंस्तदुदयपुरं लेशतश्चूर्णयिष्यन्।
आनेष्येऽहं विलगतममुं मूषिकं तं प्रतापं
गर्व्वान्मूढ़ं सपदि भवतोः पादयोस्तोपदास्ये॥२०॥

वाद। आयुष्मन्! सततमेव चिन्तनीयं खल्विदं सारार्थं नीतिवाक्यम्—

ऋणश्च रोगश्च रिपुश्च धीमान्
मन्येत न क्षुद्रतया कदाचित् ।
समूलमुच्छेत्तुमिमान् यतेत
न चेद्विवृद्धो ध्रुवमेव हन्युः ॥२१॥

सेलिमः । (सप्रणामम्) वाढ़म् ।

इति निष्क्रान्ताः सर्व्वे ।

---

मिवारप्रयाणं नाम तृतीयोऽङ्कः ॥०॥

---

# चतुर्थोऽङ्कः।

——:००:——

अथ प्रविशति कालीमन्दिरालिन्दे शान्तिशरणमिश्रः।

शान्ति। अहो! उपाध्यायेनादित एवादिष्टम्, गतः खलु रोषज्वलनज्वलितहृदयो मानसिंहः। तदत्यासन्नं यवनयुद्धम्। तत्र च विजयलक्ष्मीलाभायावश्यकरणीये स्वस्त्ययने परीक्षितगुणा ब्राह्मणा वरणीया इति। तान् प्रेषयितुञ्च विज्ञापितस्तत्रभवान् राजगुरु रामप्राणत्रिपाठी। इतश्च श्रूयते युयुत्समाना यवनसेना प्रायेणासन्ना। तत् कथं चिरयति त्रिपाठी। (विलोक्य सहर्षम्) हन्त! अमी त्रयो ब्राह्मणा एवागच्छन्ति; तदमीभिरेव तैर्भवितव्यम्।

ततः प्रविशन्ति त्रयो ब्राह्मणाः।

शान्ति। (सप्रणामम्) स्वागतमत्रभवताम्। नन्वलङ्क्रियन्तामासनानि।

ब्राह्मणाः। (देवतां प्रणम्य शान्तिशरणञ्च प्रत्यभिवाद्य नात्युच्चैरुपविशन्ति।)

शान्ति। (प्रथमं प्रति) नन्वभिधानमभिधीयतामात्मनः।

प्रथमः। सु-सु-सुधाकर-दि-दि-द्विवेदी।

शान्ति। तत्रभवान् किंगोत्रः?

प्रथमः । का-का-काश्यपगोत्रः ।

शान्ति । (सक्षोभम्) किं तावदधीतम् ?

प्रथमः । व्या-व्या-व्या व्याकरणम् ।

शान्ति । अन्यत् किमपि ?

प्रथमः । छा-छा-छागलेय-ध-ध-धर्म्मशास्त्रम् ।

द्वितीयः । (सोत्प्रासम्) शक्तिपूजायामेकान्तमेव च्छागलेय-प्रयोजनम् ।

प्रथमः । (सक्रोधम्) वा-वा-वाचाट ! त-त-त्वमपि मा-मा-माद्दिषेयः, त-त-तवापि त-त-तत्र प-प-प्रयोजनम् ।

द्वितीयः । (सक्रोधविस्मयम्) एष खलु वङ्गभाषामपि जानाति । वङ्गीयाश्च तातं वावेति ब्रुवन्ति, एषोऽपि मां तथैव ब्रवीति ।

प्रथमः । (साटोपं कटीं बध्नाति ।)

शान्ति । (सहासम्) न केवलं वावेति, मामेत्यपि प्रयुक्तम् ।

द्वितीयः । (सक्रोधहासम्) वैधेयेनामुना मयि खलु वीभत्सः सम्पर्कसङ्करः कृतः ।

प्रथमः । (द्वितीयं प्रहर्त्तुमुद्युङ्क्ते ।)

द्वितीयः । (तथैवोद्यच्छति ।)

शान्ति । (उभयमेव विधृत्य स्थापयित्वा दासीमागता-मालोक्य) अये ! पादोदकमेषामुपहर ।

द्वितीयः । तिष्ठ । अहो ! इयं खलु स्पृश्यजला

अस्पृश्यजला वेत्यनिश्चिन्वान: कथमुररीकरोमि । (दासीं प्रति) किं ते नाम ?

दासी । भअवदी दासी । (क)

द्वितीय: । अये ! भगवत्यस्तु यूयं सर्व्वा एव योषित: । तत्ते किं विशेषाभिधानमिति पृच्छामि ।

सर्व्वे । (हसन्ति ।)

दासी । (सलज्जं सहासञ्च परावर्त्तते ।)

प्रथम: । प-प-पश्यन्तु भवन्त:, ए एष खलु दु-दु-दुर्म्मनुष्यो यो-यो-योषित: स-स-सन्निधावेवाश्लीलं व-वदति ।

द्वितीय: । तर्हि तु 'भगवद्गीता' 'भगवानुवाच' इत्याद्युक्तिरपि तादृश्येवाश्लीलोक्ति: स्यात् ?

प्रथम: । धि-धि-धिङ्मूर्ख ! अत्र तु भ-भ-भगशब्दस्य मा-मा-माहात्म्यमर्थ: ।

द्वितीय: । अत्रापि श्रीरेवार्थ: ।

प्रथम: । स-स-सर्वा न श्री-श्री-श्रीमत्य: ।

शान्ति । (हस्तसङ्केतेनोभौ वारयित्वा दासीं प्रति) गच्छ त्वम् ।

दासी । (गच्छन्ती सर्व्वानुद्दिश्य सन्निहिततृतीयान्तिके प्रणमति ।)

तृतीय: । पुत्रवान् भव ।

सर्व्वे । (हसन्ति ।)

---

(क) भगवती दासी ।

शान्ति। (सहासम्) अये! स्त्री खल्वेषा। तद्वतीति ब्रूहि।

तृतीय:। (शिरः सञ्चाल्य) सत्यम्, पुत्रवान्वती भव।

सर्व्वे। (अट्टहास्यं कुर्व्वन्ति।)

शान्ति। अहो! पुत्रात् परं वानिति न तिष्ठेत्।

तृतीय:। (सशिरःकम्पम्) वाढम्, वान्पुत्रवती भव।

सर्व्वे। (तथैव हसन्ति।)

शान्ति। आः! पुत्रात् पूर्व्वमपि वानिति न भवेत्।

तृतीय:। तर्हि, पुत्रवतीवान् भव?

सर्व्वे। (हसन्ति।)

शान्ति। (सहासम्) एतदपि न।

तृतीय:। वतीपुत्रवान् भव।

शान्ति। आः! कोऽयं दुर्व्विपाकः।

तृतीय:। तदा वान्वतीपुत्र भव।

शान्ति। नैवमपि।

तृतीय:। अस्तु, तर्हि वतीवान् पुत्र भव।

शान्ति। धिङ्मूर्खं!।

तृतीय:। (वृद्धाङ्गुष्ठद्वयं प्रदर्श्य) तदा तु नास्त्येव संस्कृतभाषायामीदृशीनामाशीर्व्वादः।

शान्ति। (सक्षोभमात्मगतम्)

पूर्व्वमासन् वशिष्ठाद्या इदानीमीदृशा द्विजाः।
अहो! कालस्य महिमा सौधस्थाने दलालयः॥१॥

(प्रकाशं द्वितीयं प्रति) अथ राजगुरुणा त्रिपाठिनैव प्रेषिता भवन्तः ?

द्वितीयः । न खलु कुसुमविक्रेतरि त्रिपाठिनो विक्रीय केनापि पठ्यमानं भवत्पत्रञ्चाकर्ण्य निजविपणिमागते तत् क्रेतुं गतेन च मया ततः श्रुतम्, स्वयोग्यताज्ञानेन चात्रागतं पथि च मिलितम् ।

प्रथमतृतीयौ । आवाभ्यामपि तथैव ।

शान्ति । उपपद्यते सर्व्वम् । (प्रत्येकं द्वे द्वे मुद्रे प्रदाय) इयं वो राज्ञः प्रणामदक्षिणा । अलमायासेन भूयसा, गन्तुमर्हन्ति भवन्तः ।

त्रय एव । (गृहीत्वा देवतां प्रणम्य शान्तिशरणञ्चाभिवाद्य ससन्तोषं प्रतिष्ठन्ते ।)

प्रविश्य सुप्रभदेवोपाध्यायः । (देवतां प्रणमति ।)

शान्ति । (उपाध्यायमभिवादयते ।)

सुप्रभ । सचिन्त इव लक्ष्यसे ?

शान्ति । न खलु सचिन्तः, सोद्वेग एव ।

सुप्रभ । केन नाम ?

शान्ति । अद्यापि प्रस्तुतस्वस्त्ययनस्यानारम्भेण ।

सुप्रभ । आश्वसिहि । महाराजः स्वयमेव सङ्कल्प्य वरयित्वा च चण्डीमण्डपे पण्डितानेव गुरुणा प्रेषितान् पञ्च-ब्राह्मणान् स्वस्त्ययने व्यापारयामास ।

शान्ति । (सहर्षम्) साधु,

अनागतां सम्पदमातनोति
समागतामापदमुत्क्षिणोति।
स्वास्थ्यञ्च तेजश्च ददात्यपूर्व्वं
दैवी क्रिया बन्धुतमा नराणाम् ॥२॥

भवतु। किमारम्भः सम्प्रति महाराजः?

सुप्रभ। चतुरङ्गिनी यवनवाहिनी समायातीति युद्धसन्नद्धः सर्वाङ्गसम्पन्नसैन्योपपन्नो हरिद्राघट्टं प्रति प्रस्थितः। अस्ति चापरः परमशुभः संवादः।

शान्ति। (सोत्कण्ठम्) को नाम?

सुप्रभ। जानास्येव, यथा तदानीं शक्तसिंहो मानापमान-मनैतिकमसहमानः प्रतिवदन् महाराजेन निराकृत-स्तिरस्कृतश्चेति।

शान्ति। श्रुतोऽयं वृत्तान्तो भवत एव।

सुप्रभ। पश्चादसौ वादसाहमाश्रितः, समये च समासन्ने नितरां निर्व्वेदमापन्नो विभीषणकलङ्कादात्मानं मोचयन् वादसाहमनुज्ञाप्य मिवारानागच्छन् पथि भिन्नशूरं (भिन्सोर) नाम दुर्गं विजित्यागत्य महाराजायोपजहार।

शान्ति। (सानन्दोच्छ्वासम्) साधु साधु। पराचीना का वार्त्ता?

सुप्रभ। महाराजेन च सानन्दमाददानेन तत्प्रदेश एव कृतः सामन्तः शक्तसिंहः।

शान्ति । तर्हि शक्तसिंहः सम्प्रति समरसहायो महाराजस्य ?

सुप्रभ । अथकिम् । साम्प्रतमसौ भिल्लसेनानायकः संवृत्तः ॥

शान्ति । (साञ्जलिबन्धम्) मातः सर्वमङ्गले ! क्वतमिदानीं त्वया सार्थकमेवात्मनाम् । इतः परञ्च—

जयश्रीर्धीयतां पुत्रे पुत्रिण्ये वोत्तमाङ्गना ।
क्रियतां म्लेच्छनाशेन हिन्दुस्थानञ्च भारतम् ॥२॥

इति निष्क्रान्तौ ।

—o—

## विष्कम्भकः ।

—ः०ः—

ततः प्रविशति हरिद्राघट्टप्रान्तवर्त्तिगिरिशिखरे

सशस्त्रः शक्तसिंहः।

शक्त। आर्य्यादेशेन संवृत्तोऽस्मि भिल्लसेनानायकः; यथास्थानं सन्निवेशिता च सा सेना। किन्तु नाद्यापि दृष्टिविषयो मानसिंहानीता यवनवाहिनी। हन्त! आर्य्येण मया चास्मिन् समरे मानसिंहस्य लोचनगोचरता सर्व्वथैव समाशास्यते। अहो! विचित्रं नाम जनचरित्रं जगत्याम्। जनः किलात्मानुरूपं स्तौति, तदननुरूपञ्च गर्हयति। तेन च सज्जनः सज्जनं प्रशंसति दुर्ज्जनञ्च निन्दति; दुर्ज्जनश्च दुर्ज्जनं प्रगुणीकरोति सज्जनञ्च विगायति। अतएव हि यवनपदलेही मानसिंहो यवनद्वेषिणं प्रतापसिंहं निर्बोधमभिधाय निर्गतः। मया तु मन्यते मानसिंहः खल्वेकः प्रकाण्डो रासभः। तथा च—

परस्य वहतो भारं परादेशेन गच्छतः।

तत्प्रसादञ्च भुञ्जाते मानसिंहस्य रासभः ॥४॥

तयोरन्तरेऽपि च मानसिंह एवाधमतरः। येन हि—

भ्रष्टस्य मानसिंहस्य विदेशी यवनः प्रभुः।

खरस्य तु खरस्यायं स्वदेशी रजकः पतिः ॥५॥

(विभाव्य) अहोवत! मानसिंहो यदि धीमानेवाभविष्यत्, तदा गान्धारसीम्नः समारभ्य भारतकानपर्य्यन्तं प्राप्यमेव राज्यं विजित्य यवनाय नोपाहरिष्यत्; तथा निखिलबलामामेव

नितान्तानुकूलतया नितरामविश्वासिनो यवनपतेर्विश्वासमात्र-वर्ण्णनेनैव भारतसाम्राज्यमिवार्ज्जयिष्यत् । तदेव मानसिंहस्य बुद्धिविपर्य्यय एव हिन्दोर्वा हिन्दुस्थानस्य वा भाग्यविपर्य्यय-स्थायिताया विषमबीजम् । तद्यदि वयमत्र संग्रामे विजयलक्ष्मीं लप्स्यामहे, तदावश्यमेव भारताद्यवनापसारणेन साम्राज्यमारोपयितुमेव यतिष्यामहे ।

नेपथ्ये एकस्यां दिशि । आल्ला आल्ला हो !

अन्यस्यां दिशि । कालि ! कालि ! कालि ! दानव-द्राविणि !

शक्त । (सौत्सुक्यम्) अहो ! समासन्ना यवनसेना ।

ससम्भ्रमं प्रविश्य शम्भुसिंहः । कुमार ! कुमार ! दृश्यताम्—असावारावल्लीगिरिमालापार्श्वतः प्रादुर्भवति यवन-सेना । तन्महाराजः समादिशति—अस्माभिरेवैषा प्रथम-माक्रमणीया । तत्त्वरितमुपेत्यायुष्मन्तं शक्तसिंहं ब्रूहि—यत्, शरपातपथवर्त्तिन्यामेव यवनवाहिन्यां भिल्लसेना यथा गिरि-गात्रात् प्रहर्त्तुमारभते, तथा क्रियतामिति ।

शक्त । (सहर्षम्) युक्तमादिष्टं वीरधुरन्धरेण । अस्माक-मान्नेयास्त्रविरहाद्दिशिखैरेव तद्विधयो दूरप्रहारो विधातव्यः । तद्गच्छामि, तथैव करोमि । (इति द्रुतं निष्क्रान्तः)

नेपथ्ये । अहो देशप्रियाः साधुसङ्कल्पाः भिल्लवीराः ! आयाति देशवैरिणी यवनवाहिनी । तदस्यां शरपातपथोप-स्थितायामेव भवद्भिः शरैः प्रहर्त्तव्यम् । तेन च—

तथा भवन्तो हि शरान् किरन्तु
च्छिन्दन्तु भिन्दन्तु च वैरिवारान् ।
रामार्ज्जुनद्रोणमुखान् प्रवीरान्
विलोकयतोऽद्य यथा स्मरन्ति ॥६॥

नेपथ्ये । कालि ! कालि ! कालि ! दानवद्राविणि ! (इति मारध्वनिसमानतरमेव शतशो धनुष्टङ्काराः, श्राल्ला श्राल्ला हो ! इति मारध्वनिपरतश्च युगपदनेकशतघ्नी-नालीक-निनादाः प्रादुर्भवन्ति ।)

शम्भु । अहो ! दूरादुपक्रान्तः समरः, एकतः शिलीमुखसम्प्रहारेणान्यतश्च गुलिकावर्षणेन । तथापि सेनानायकनिर्देशेन भिन्नसेनासञ्चालनाय शक्तसिंहमनुकूलयितुमस्माभिरत्रैव स्थेयम् ।

प्रविश्य शक्तसिंहः । (सहर्षम्) शम्भुसिंह ! पश्य पश्य—

मण्डलीकृतकोदण्ड-निर्गता मार्गणा अमी ।
गच्छन्ति गगने शीघ्राः शकुन्ता इव सस्वनाः ॥७॥

शम्भु । विपक्षतोऽपि प्रेक्षस्व—

बृहन्नालीक-नालीक-निक्षिप्ता क्षिप्रगामिनी ।
क्रमशानुपदवीवियमायाति गुलिकावली ॥८॥

शक्त । एष खल्वाविष्कारो नाद्यापि समीचीनः संवृत्तः । येन हि प्रथमं विस्फोरकपूरणम्, परं गुलिकाप्रवेशनम्, अनन्तरं लक्ष्यस्थिरीकरणम्, ततश्चाग्नियोजनमिति प्रक्रियागौरवेण भूयः समयक्षेपः । तेन च तदन्तरे महानेयान्तरायः सम्पद्यते परप्रहारेण ।

अभ्र । एष हि क्रमविकाशस्वभावः, यत् क्रमेण वोन्नतिं लभते वैज्ञानिकः पदार्थः । तथा चादिसर्गे सर्व्वथा अस्त्राभावेन भगवान् नारायणो मधुना कैटभेन च सममति-भूयांसमेव समयं बाहुयुद्धमेव विदधे । "पञ्च वर्षसहस्राणि बाहुप्रहरणो विभुः ।" परञ्च "कुन्तायुधञ्च खङ्गञ्च शार्ङ्गायुध-मनुत्तमम्" कुन्तं खङ्गं शृङ्गरचितं वक्रमेकं अस्त्रञ्च लक्षयामः । अनन्तरञ्च रामरावणसङ्करे गरीयसीमेवोन्नतिमस्त्राणां शृणुमः । ततोऽपि कुरुपाण्डवसाम्पराये परां काष्ठामेवोन्नतिरस्त्राणां पश्यामः ।

अजा । स किलोत्कर्षः कदा कथं नाम तिरोहितः ?

अभ्र । कुरुपाण्डवसमर एव वीरवैज्ञानिकविलोपेन शिक्षकसम्प्रदायविलोपाद्विलुप्त इत्यैतिहासिकाः समामनन्ति ।

नेपथ्ये महान् कलकलः ।

उभौ । (ससम्भ्रममवलोकयतः)

अजा । (सौत्सुक्यम्) अभ्र सिंह ! पश्य पश्य, परस्पर-शरीरसंयोगेनैव सङ्करः संवृत्तः ।

अश्वैरश्वाः समिति मिलिता दन्तिभिर्दन्तिनश्च
पद्गैः पद्गाः प्रबलरभसाः स्यन्दनैः स्यन्दनाश्च ।
तुल्यो ध्वानः सरय-सरितोः सम्भ्रवद्वृत्तिमत्योः
सञ्जातोऽयं युधि पृतनयोर्भीषणश्च प्रहारः ॥८॥

अभ्र । कुमार ! दारुणो दारुणः सम्प्रहारः संवृत्तः ।

शूलेन वक्षो विभिनत्ति कश्चित्
परोऽसिना तस्य शिरश्छिनत्ति ।
परं समाश्लिष्य परस्परं तौ
प्रेम्णेव तूर्णं समरे शयाते ॥१०॥

शक्त । (समन्तादवलोक्य सौत्सुक्यम्) शम्भु सिंह ! अयमेव सङ्कुलः समर इत्याख्यायते । पश्य—

दोर्भ्यां दारयते क्षतः क्षपयते च्छिन्नश्छिनत्त्युल्बणः
विद्धो विध्यति वा धृतो धरति वा श्लिष्टः परं श्लिष्यति ।
हस्ताहस्ति नखानखि प्रकुरुते नष्टास्त्रकः सैनिकः
मुष्टीमुष्टि कचाकचि प्रहरते त्वस्मो रणो दारुणः ॥११॥

शम्भु । (विलोक्य सविस्मयम्) कुमार ! कः खल्वसौ मनोहरमूर्त्तिरत्युज्ज्वलवेशश्च युवा सुसज्जितं मत्तमातङ्ग-मारूढो यवनपृतनायाः पुरस्तात् प्रादुर्भवति ?

शक्त । (दृष्ट्वा साटोपहर्षकौतुकम्) असौ किल वादसाह-सूनुः सेलिमः । अयमेवाद्यतनः सेनापतिः प्रतिपक्षस्य ।

शम्भु । (सखेदम्) सेलिम एवाद्यतनः सेनापतिः, न पुनर्मानसिंहः ?

शक्त । अथकिम् । अद्य समरे सेलिमस्य मन्त्रिपदे निहितो मानसिंहो वादसाहेन ।

शम्भु । धिङ्मानसिंहम् । येन हि—

सर्व्वसम्पत्तिदानेन क्रीता यवनदासता ।
तत्राप्यद्य गृहीतेयमसारा रणमन्त्रिता ॥१२॥

श्रक्त। आः किमुच्यते। न खलु मानसिंहः साक्षात् सम्प्रहारविशारदः, अपि तु कपटकूटपटीयान्। अतएवाद्यासौ दुरात्मा क्वापि प्रच्छन्नः स्थितः।

शम्भु। सर्व्वथा सम्भवत्येवम्। मन्ये च तत एवास्माकं महाराजस्तमन्विष्यन् नितरामाकुलः संवृत्तः।

शक्त। वयमप्येवं सम्भावयामः।

शम्भु। (विलोक्य सावेगम्) कुमार! पश्य पश्य,

सेनापतिं यवनसैनिकसम्मुखस्थम्
आलोक्य चैतकगतो द्विगुणोद्यमोऽसौ।
निघ्नन् करीव नलिनानि समीपगानि
सैन्यानि धावति जवेन मिवारराजः ॥१३॥

शक्त। (दृष्ट्वा सोन्मादमिव) शम्भुसिंह! न मे युक्तमिदानीमत्रावस्थानम्। तत्क्षणमेवाहमार्य्यमनुवर्त्तिष्ये, त्वञ्च सञ्चालय भिन्नसेनाम्। (इति द्रुतं निष्क्रान्तः)

शम्भु। (समीक्ष्य भोल्लासम्) अहो! दुर्व्वारो वेगः पुरुषसिंहस्य। साधु प्रतापसिंह! साधु,

चैतकश्चलति दुःसहस्यदस्त्वञ्च चालयसि घूर्णयन्नसिम्।
सम्पतन्ति रिपवश्च भूतले पार्श्वयोश्च पुरतश्च सन्ततम् ॥१४॥

नेपथ्ये। कालि! कालि! कालि! दानवद्राविणि!

पुनर्नेपथ्ये। आल्ला आल्ला हो!

शम्भु। तत् कथमुल्लासो यवनानामपि। (विलोक्य) हंहो यवना अपि तीव्रमाक्रामन्ति हिन्दून्। (पुनर्निपुणमवलोक्य)

अये ! परस्पराक्रमणायोपक्रममाणौ क्रमेण सेलिमप्रताप-सिंहावित एवागच्छतः ।

नेपथ्ये कलकलः ।

शम्भु । (दृष्टिं कलकलानुवर्त्तिनीं विधाय) आः अरवः खल्विममेव शैलमारोढुमुपक्रमन्ते । तत् प्राक्सञ्चितपाषाण-सम्पातनेन तान् निपातयामि । (द्रुतं निष्क्रान्तः)

अथ प्रविश्य चारणा गायन्तः परिक्रामन्ति ।

धाव धाव वीर ! तुमुलरणमध्ये
संहर सततं नहि दया वध्ये ।
शीघ्रं प्रहर प्रहरणशाली
वदने वदतां जय मा कालि !
भिन्धि भिन्धि त्वरितं रिपुवक्षः,
छिन्धि छिन्धि द्विषतो ननु दक्ष !
विपदि निमग्ना जननी च जाया
का तव शान्तिः का तव माया ।
द्विषतामसृका संसृज सिन्धुम्
उद्धर विषयानुद्धर बन्धुम् ।
नाशय निविडं तिमिरं तूर्णं
चिरमालोकं कुरु परिपूर्णम् ॥

अथ प्रविशतो विपरीतद्वारद्वयेन साटोपमुद्धतक्रमौ सेलिमप्रतापसिंहौ, विभवतश्चोभयसैन्ये ।

सेलिमः । अये ! अद्यैव लप्स्यसे मानसिंहस्य मानहरण-प्रतिफलम् ।

प्रताप । आः समयमियन्तं यावन्मानसिंहं मञ्जूषाया-मापूर्य्य गर्ज्जसि ; तत्तूर्णमाविष्कुरु तं दुरात्मानम्, तदानीं तस्य मानमपहार्षम्, इदानीन्तु जीवनं हरामि ।

सेलिमः । अरे ! वाङ्मात्रसाराः खलु हिन्दवः शतश एव परीच्चितपराक्रमाः पूर्व्वम् ।

प्रताप । ब्रूहि तावदेकमपि निदर्शनम्, यत्र किल हिन्दवः पराक्रमपराङ्मुखाः संवृत्ताः ।

सेलिमः । श्रूयतां तर्हि, प्रथमं सोमनाथमन्दिरलुण्ठनम्, द्वितीयं तरायणायोधनम्··· ।

प्रताप । अयि इतिहासवालिश ! इत एव निवर्त्त-स्वात्मविकत्थनात् । कतिपये निरीहे हिन्दुसन्ताने शङ्कर-सेवाप्रवृत्ते अकस्मात् सन्निपत्य ससेनः सुलतानमामुदो यत् सोमनाथमन्दिरमलुण्ठत् ; तत् खलु दस्युतायाः परमं निदर्शनम् । यच्च तरायणायोधने सन्धिभिच्चया विरत-मामोदमग्नं वर्म्म ग्रहीतुमप्यलब्धावसरञ्च पृथ्वीराजमजय-द्विजितो महम्मदः, सोऽपि च विश्वासघातकतायाश्चरमो दृष्टान्तः ।

सेलिमः । अरे वाचाट ! नितरामुपकर्त्तारमप्यधिच्चिपसि । अवधीयतां तर्हि—तत्रभवान् सुलतानमामुदः सत्सङ्कल्प एवासीत् । तथा च—

ये चिन्मयस्य हि तनुं परिकल्पयन्तः
संस्कारदोषवशतः समुपासते ताम् ।

तानेव शिक्षयितुमेव हि सोमनाथं
सम्ब्रणं साधु गुरुकर्म्म चकार कामम् ॥१५॥

परञ्च यद्‌ब्रवीषि, मद्भर्म्मः चोरो विश्वासघातक इति ; तत्रापि ब्रवीमि—नूतनदेशजिगीषुः सेनानायको न खलु युष्माकं तपोवननायको भवितुमर्हति । तेन च—

राज्यजीवनधनानि जिहीर्षु-
र्दारुणं किल रणं व्यदधाद् यः ।
तत्र विश्वसिति यः खलु मूर्खः
तस्य तत् फलमलं ननु युक्तम् ॥१६॥

प्रताप । अये ! महाकौतुकहेतुः स एवायमुन्मत्तप्रलापः । आस्तां तावत् । तथा सति—

ब्रह्मैवैकं सत्यमन्यद्‌भ्रमस्थं
युष्माकञ्चाप्येष सिद्धान्तवादः ।
तस्माद्‌भ्रान्तं मस्तकं तेऽधुनैव
च्छिन्दन् कुर्य्यां मूढ़ ! गाढ़ोपकारम् ॥१७॥

सेलिमः । रे रे दुरात्मन् ! सति सामर्थ्ये किमुपेक्षसे मे शिरश्छेत्तुम् । भवतु । एष ते सारोपदेशः ।

मिवारराज्यं त्वरया विसृज्य
वह्निर्भव त्वं स्वजनैः समेतः ।
प्राणा न चेत्ते ननु तैः सहैव
वह्निर्भविष्यन्त्यचिरं रणेऽस्मिन् ॥१८॥

प्रताप । अये यवनापसद ! अहमपि ब्रवीमि—

पूर्णैः पद्मैरिव शुचिशुभे श्रेवलौघस्तड़ागे
हिन्दुस्थाने यवननिवहो दैवयोगात् प्रविष्टः ।
चायं चायं तमिव तमहं सर्वतस्ताड़यिष्यन्
शान्तं पूतं पुनरपि परं संविधास्याम्यवश्यम् ॥१८॥

सेलिमः । रे रे पार्वत्यमूषिक ! क्षिप्रमिदानीम्—
अवनम चरणान्ते प्रार्थय प्राणभिक्षां
परिहर च मिवारान् वन्दिभावं भजस्व ।
सह च यवनजात्यैरेकपात्रे किलान्नं
सपदि निड़गितः सन्नन्यथा द्राङ् म्रियस्व ॥२०॥

प्रताप । अये स्त्रीमांसांकपरिष्कारक ! यवनापसद ! यूयमेप्यद्यप्रभृत्येव—
सदा चलत संयताः कुरुत मात्र धर्मक्षतिं
क्रमात्त्यजत भारतं व्रजत तुर्किदेशं पुनः ।
न चेत् पथि जले स्थले पुरि गिरौ मरौ कानने
गृहे च भवत ध्रुवं सपदि खण्डखण्डीकृताः ॥२१॥

सेलिमः । (तरवारिमुत्तोल्य) आः पाप दुरात्मन् !

प्रताप । (शूलमुद्यम्य) आः पाप दुरात्मन् !

(इति परस्परमाक्रामन्तौ निष्क्रान्तौ उभयसैनिकाश्च)

(नेपथ्ये । कालि ! कालि ! कालि ! दानवद्राविणि !)

प्रविश्य ससम्भ्रमं शम्भुसिंहः । तत् कथं मारध्वनिः क्षत्रियाणाम् । (विलोक्य) अहो ! शूरसिंह एव प्रतापसिंहः । तदस्य प्रतापोऽपि मूर्त्तिमानिव प्रकाशते । अमुष्य हि—

दुर्व्वारवेगस्य निवर्त्तनाय
तथा पुनः सेलिमरक्षणाय ।
ये ये समायान्ति तरूनिवैतान्
दावानलो हन्ति मिवारराजः ॥२२॥

नेपथ्ये । जयः प्रतापसिंहजयः, जयो मिवारजयः ।

शम्भु । (दृष्ट्वा) अहो ! हतो हतः सेलिमः । येन च—

करीन्द्रकुम्भे ननु चेतकोऽय-
मुत्प्लुत्य पादद्वयमादधाति ।
शूलं समुद्यच्छति शूरसिंहो
गतो गतः सेलिम एष शेषम् ॥२३॥

(विलोक्य सविषादम्) हा हन्त ! हा हन्त ! क्षिप्तं किल शूलं वेष्टनोप्रतिहतमाधोरणं निपात्य निपतितम् ।

आशीविषविनाशाय क्षिप्तमस्त्रं शिलीमुखम् ।
निहत्य निष्फलं जातं दैवं हि बलवत्तरम् ॥२४॥

(दृष्ट्वा सहर्षाटोपम्) अहो ! साधु, साधु, सत्रासं पलायते सेलिमः, साटोपमनुधावति च तं प्रतापसिंहः ।

नेपथ्ये । आल्ला आल्ला हो !

तत् कथमयमुल्लासो यवनानाम् । आः ! सङ्करान्तरे भागीरथीप्रवाह इव प्रतापसिंहे पतति यवनबलप्रवाहः ।

श्वेतातपत्रं ननु राजचिह्नं
विलोक्य तत्रावति वैरिवृन्दम् ।
क्लान्तोऽवसन्नोऽपि च युध्यतेऽसौ
अहो ! सुदुर्वारविपत्प्रपातः ॥२५॥

(विशेषेणावलोक्य) तत् कतमोऽयं स्वल्पसैनिकसमेतः प्रविशति, प्रतापसिंहशिरस्तश्च श्वेतातपत्रमाच्छिप्य स्वशिरसि निदधाति? आं ज्ञातम्, सोऽयं महात्मा झालापतिर्नाम्ना आत्म-प्रदानेनापि प्रतापसिंहं परित्रायते; धीमानसौ चैतकस्य प्रभुमुपादाय निरर्गलं रणाङ्गनादपक्रामति। अहो! साधु साधु, अभी झालापतिः किलाधुना—

समन्तादुपेतान् सपत्नाननन्तान्
निघ्नन् विभिन्दन् परं पोथयंश्च।
विमाथ्यन् गजेन्द्रो नलानीव भञ्जन्
असिं चालयन् घूर्णतेऽसौ महात्मा ॥२६॥

नेपथ्ये। जयो दिल्लीशजयः, जयः सेलिमजयः।

तत्कथमयमुल्लासो यवनानाम्। (विलोक्य सखेदम्) हा कष्टम्, हा कष्टम्, निरन्तरताडनाच्छिन्नविदीर्णदेहो झालापतिस्तरङ्गा-दपध्वस्तः। धन्यः खल्वयं महात्मा—

जानन् जन्मभुवोऽस्य रक्षणविधौ शक्तं प्रतापं ध्रुवं
नात्मानन्तु तथेति मुञ्चति तनुं तस्यापदो मुक्तये।
स्वच्छः स्वं विगुणं विहाय सगुणं प्रायः परं त्रायते
दग्धुं स्वर्णमलं ददाति हि निजं दीप्तेऽनले सीसकम् ॥२७॥

तदसौ न शोचनीयः, प्रत्युत चिरस्मरणीय एव। (विभाव्य) हा भगवन्! एव खलु षट्सप्तत्यधिकपञ्चदशशतसंवतः श्रावणस्य सप्तमो दिवसः केषां विषादेन परेषाञ्च हर्षेण चिरमेव स्मृतिपथमुदेष्यति। येन हि—

क्रान्तः प्रतापः समरादपासरत्
झालापतिर्विस्मयकृज्जहौ तनुम् ।
रणेऽत्र सैन्यस्य दशानका हताः
विधिर्बलीयान् विदधाति वैरिताम् ॥२८॥

इति सविषादं निष्क्रान्तः ।

——ः०ः——

## चतुर्थोऽङ्कः ।

——०——

## चतुर्थाङ्के गर्भाङ्कः ।

——:००:——

सम्भ्रमं प्रविश्य सूत्रधारः ।

शक्तिं देहि महाशक्ते ! त्वरया चानुकूलताम् ।
देवनामिव हिन्दूनां पुरा देवासुरे रणे ॥१॥

(विलोक्य) हा धिक्, क्रान्तमपक्रामन्तमप्याक्रामन्ति हिंस्रा-सुकिंषः । तथा च—

खोराशानी मूलतानी च सैन्यौ
पृष्ठे लग्नौ हन्त हन्तुं प्रतापम् ।
अस्तं शैलं द्रागिवेन्दुं यियासुं
वाहारूढौ धावतो धूमकेतू ॥२॥

साधु वाजिराज ! चैतक ! साधु, त्वं खलु क्षतविक्षताङ्गो नितान्तक्रान्तदेहोऽपि सादिनमादायेदानीमपि यथेच्छमेव गच्छसि । अहोवत ! स्वस्थतया स्वस्तिमन्तौ यवनसैनिक-तुरङ्गौ तु तड़िद्वेगसा मन्दगन्तारं चैतकं प्रायेणासादयत इव । इतस्तु शोणितप्लुतशरीरः सुतरामवसन्नो विषसस्याश्वपृष्ठे केवलमवतिष्ठत एव प्रतापसिंहः ।

(अञ्जलिं विधाय) भगवन् ! विष्वक्सेन ! त्वं खलु युगपदेव त्रिभुवनस्यापि त्राणे शक्तः । तेन च—

देव ! शक्त ! समायाहि पाहीमौ राजवाजिनौ ।

नेपथ्ये।

एष शक्तः समायातः समाश्वसिहि साम्प्रतम् ॥२॥

तत् क एष मामाश्वासयति? (विशेषेणावलोक्य सहर्षम्) एष खलु दुर्व्वारवेगं तुरगमारूढ़ः सशस्त्र एव शक्तसिंहः प्राप्तः। असौ तु प्रागुक्तं शक्तपदमात्मनि योजयन् मामाश्वास्य शत्रु-सैनिकयोः पृष्ठतः प्रायेण संसृष्टः। तदयं शूराग्रियो बाढ़-मेवाग्रजं त्रायेत।

इति निष्क्रान्तः।

प्रस्तावना ॥०॥

अथ प्रविशति रक्ताक्तदेहस्ताहृशमेव तुरङ्गमारूढ़ः प्रतापसिंहः ।

प्रताप । (सम्मुखस्थां शैलकुल्यामवलोक्य सविषादम्) हा विधे ! अचेतनः पदार्थोऽपि मे परित्राणं प्रतिबध्नाति ।

तुरङ्गः । (तथा वदन्तमेव प्रतापसिंहमादाय समुत्प्लुत्य शैलकुल्यायाः परपारं गत्वा मन्दमन्दं गच्छति)

यवनसैनिकद्वयम् । (तत्कुल्यातीरमुपेत्य तथोत्प्लवनासमर्थं स्वं स्वमश्वं कुल्यातरणाय तीव्रं ताड़यति)

तदश्वयुगलम् । (कुल्यायामवतरति)

ततः प्रविशति तत्कुल्यातीरे तुरगारूढ़ः शक्तसिंहः ।

यवनयोः पृष्ठगः । (अश्वपदध्वनिमाकर्ण्य मुखं परावर्त्य शक्तसिंहं पश्यति)

शक्त । (दृष्ट्वा) अये ! अस्य खलु वक्षोवर्म्मणि 'खोरासानी' इत्यङ्कितं नाम लक्ष्यते । भवतु । जीवन एवास्य जीवनं हरामि । (इति हतशत्रुतो गृहीतेन नालीकेन गुलिकां निक्षिपति)

खोरासानी । (अश्वपृष्ठात् कुल्यायां पतति)

अपरः सैनिकः । (सत्वरमश्वारूढ़ एव कुल्यामुत्तरति)

शक्तसिंहाश्वः । (तमादायैव चैतकवदुत्प्लुत्य कुल्यायाः परपारं गच्छति)

शक्त । (कोषादसिं निष्क्राष्य) आः पाप ! योधधर्मानभिज्ञ ! यवनापसद ! पलायमानमपि जिघांसुर्य्यासि, तद्-

यमालयमेव याहि। (इति परिवृत्य कोषादसिं निष्काशयत एव तस्य केशपाशमाकृष्य शिरश्छिनत्ति। पतिते च तस्मिन् तस्यापि वक्षोवर्म्मणि 'मूलतानी' इत्यङ्कितं नाम पश्यति) आः! पापीयसः स्पर्शनापवित्रं मे गात्रम्। भवतु। आर्य्यपादस्पर्शेनैवैनं शोधयिष्यामि। (प्रतापसिंहं प्रति तारस्वरेण) अहो! नीलाश्वसादिन्! अवतिष्ठस्व। (इति तुरगादवतीर्य्य कुल्याजलेन रक्तापूतं पाणियुगलं प्रक्षालयति)

प्रताप। कोऽयं घनीभूतशोणितशोणशरीरो मामामन्त्र्य निवर्त्तयितुमिच्छति? आं ज्ञातम्, मामनुधावतोर्यवनयो-रेवायमेकतरः। (विलोक्य) न खलु। अस्य तावदुष्णीषच्छन्नं शिरः। तत् कश्चन हिन्दुरेव मां हन्तुं कामयते। हन्त! हिन्दुभिरेव हिन्दूनां हिंसया संवृत्तोऽयं सर्व्वनाशो भारतस्य। (निपुणमवलोक्य) नायं साधारणो हिन्दुः, राजपुत एवायम्; तादृश एवास्य वेशविन्यासः। आः स खल्वसौ दुरात्मा सागर-सूनुरजयसिंहो भविष्यति। (विभाव्य) नैवमपि। स हि पापीयानार्य्यधर्म्मं विगर्हयन् इस्लामधर्म्मे दीक्षितः प्रकृष्टो मुसलमानः संवृत्तः; स कथं पुनरपि राजपुतवेशं विदधीत। तत् कतमोऽयम्?

शक्त। (वैरिसिंहारात् सगर्वं प्रतापमभिगच्छति)

प्रताप। हन्त! अव्यवस्थितचित्तः कूटकौशली वा शक्तसिंहः खल्वयम्। तस्यैवेदं नेपथ्यं नेत्रपथे नः पान्थायते। शक्तः किलात्मानं समरे मां जेतुमशक्तं मन्यमानः साधीयांस-

मवसरमन्विष्यन्नागतः। तदसौ दुरात्मा भ्रातृहिंसायां विभीषणमप्यधश्चकार। अहोवत! भ्राता नाम नराणा-मुपकर्त्तापि गरीयान्, अपकर्त्तापि गरीयानेव। तेन च—

सुहृदामुत्तमो भ्राता दुर्हृदामपि चोत्तमः।
सन्निपाते हि दत्तेऽसून् हरतेऽन्यत्र तान् विषम् ॥४॥

तदिदानीं नितान्तक्लान्तकलेवरः किं करोमि मन्दभाग्यः। अस्यैव हि राज्यमुत्सृज्य वशीभूतो भविष्यामि। (विचिन्त्य) न खलु न खलु। तर्हि तु मानसिंह इवायमपि यवनहस्त एव राज्यमर्पयिष्यति। तदस्य हस्ते राज्ययानादस्य हस्तेन जीवनयानं मे शतधा श्रेयः। (इति तरवारिं निष्काशयन् चैतकादवतरति)

शक्त। (विलोक्य) तत्कथमार्य्यः परिचिन्वानोऽपि मां विरुन्धन्निवावतिष्ठते? आं ज्ञातम्। (इति तरवारिं कोषे प्रवेश्योष्णीषञ्चावतार्य्य साञ्जलिबन्धमुपसर्पति)

प्रताप। (विलोक्य सविस्मयम्) आश्चर्य्यम्, असेः कोषे निवेशनम्, शीर्षादुष्णीषावतारणम्, साञ्जलिबन्धनञ्चोपसर्पणम्, कथममी विनयप्रकाराः शक्तस्य? अथवा शक्तं प्रति सा भ्रान्तिमूलैवासीन्मे चरिताशङ्का। येन हि—

भ्रातुर्वृत्तिः प्रीतिरस्यैव भावात्
तीक्ष्णा या तु प्रायशः साऽन्यहेतोः।
शैत्यं सत्यं वारि नैसर्गिकं हि
स्यादागन्तो तृष्णता वह्नितापात् ॥५॥

शक्त। (उपेत्य) आर्य्य! आपदमपसार्य्यायमभिवादयते दासः। (इति पादयोः पतति)

प्रताप। (शक्तस्य शिरसि हस्तं दत्त्वा) वत्स! चिरञ्जीवी भूयाः। यावत् पृच्छामि, आयुष्मता खल्वपसारिता कतमा नामापत्?

शक्त। जानात्येवार्य्यो यथा रणाङ्गनादपसरन्तमेव भवन्त-मन्वधावद्‌यवनयोधयुगलम्।

प्रताप। जानामि।

शक्त। मयापि तूर्णमनुधावता तावुभाविव नीतौ शमन-सदनम्।

प्रताप। (सानन्दोच्छ्वासम्) शक्त! प्राणाधिक!

स शिथिलमुपगच्छन् चैतकयोः सूनुरेकां
मुदमददत रामे काननान्तस्तदानीम्।
सरभसमुपगच्छन् शैलभूमाविदानीं
मयि किल ददसे त्वं तां मुदं जीवनञ्च ॥६॥

भवतु। वत्स! इत एव हेतोरद्यप्रभृत्यायुष्मान् खोरासानि-मूलतानिनीरर्गल इत्याख्यास्यते।

उभौ। (परस्परमाश्लिष्यतः)

प्रताप। (सव्यथमिव) आयुष्मन्! परं निर्व्विण्णोऽस्मि।

शक्त। पराजयादपसरणाच्च।

प्रताप। (साक्षेपम्) अथ किम्।

शक्त। आर्य्य वीरधौरेय!

रणे जयो वा यदि वा पराजयः
प्रजीवनं वा मरणञ्च वा मयि।
भवेन्नृणामन्यतरः स्वभावतः
स्वभावभव्ये नहि भावनोचिता ॥८॥

परमपसरणञ्च न मे निर्वेदहेतुः। येन हि—

जायेत चेदुपचयोऽपचयादवश्यं
कर्त्तव्य एव हि तदापचयः स धीरैः।
युद्धादपक्रमणमाक्रमणाय कार्य्यं
तस्माद्रणग्रहणमृद्धिविवृद्धये च ॥८॥

चैतकः। (भुवि निपत्य चरणचतुष्टयं प्रसारयन् कण्ठे घर्घररवं करोति)

प्रताप। (सत्रासवैक्लव्यम्) शक्त! शक्त! चैतको मज्जीवनं प्रदाय स्वजीवनं जहाति। (इत्युष्णीषवातेन वीजयति)

चैतकः। (शिरः सञ्चाल्य निष्पन्दो भवति)

शक्त। (परीच्य) आर्य्य! प्रहारातिरेकेणाजस्रमस्रस्रंसनात् श्रमातिशयाच्च शरीरपिञ्जरान्निर्गतः खलु प्राणविहङ्गस्तुरङ्गस्य।

प्रताप। (साश्रुपातम्) किमुच्यते; चैतकस्य मे धियश्चातुर्य्यं शक्तिवैचित्र्यञ्च मानुषमप्यतिक्रान्तम्।

शक्त। (सखेदम्) वयमपि मन्यामहे—भवतः साहायके हयाकृतिरसौ मनीषी मानुषविशेष एवासीदिति। येन हि—

तुल्येऽपि प्राणचैतन्ये बुद्धिवृत्तेर्गुणागुणात्।
मानुषो मानुषः ख्यातः पशुश्च पशुरुच्यते ॥८॥

प्रताप। (सवैक्लव्यम्) हा प्राणप्रिय! चैतक! त्वं खलु मे—

सलिले तरिर्गिरिवने तुरगः
रणसङ्कटे सुनिपुणः सचिवः।
परमः सखा विचरणे च चिरं
नहि वाहनं ननु वहन्नपि माम् ॥१०॥

शक्त। आर्य्य! तमेनं चिराय स्मर्त्तुमत्रैव स्थापनीयः कश्चन प्रस्तरस्तम्भः।

प्रताप। न्याय्यमेवाह श्रीमान्।

शक्त। (साशङ्कम्) आर्य्य! अयुक्तमिदानीमावयोर्दीर्घकालमत्रावस्थानम्। तद्भवानस्मदीयमेवाश्वमधिरुह्य कमलमीरं गच्छतु; अहमपि निहतयवनयोरेकतराश्वेन भिन्नशूरदुर्गमेव गच्छामि।

प्रताप। एतदेवावयोरिदानीं युक्ततमम्। (इति तं तमश्वमारुह्य निष्क्रान्तौ।)

चतुर्थाङ्के गर्भाङ्कः।

—:०:—

## प्रतापपराजयो नाम चतुर्थोऽङ्कः ॥०॥

——:——

# पञ्चमोऽङ्कः ।

——:o:——

अथ प्रविशति निविड़पर्व्वतारण्ये परशुकरखड़ोहस्तं भिल्लकाष्ठिकद्वयम् ।

प्रथमः । महुआ ! जं पुच्छसि, ता सुणु, अह्माणं लाआ क्खु महन्ते ज्जेव भद्दलोओ । (क)

मधुकः । किं तत्त पमाणं ? (ख)

प्रथमः । चलित्तं चलित्तं, इमस्स क्खु अलोइअं महुलं चलित्तं ज्जेव भद्दत्तणे पमाणं । (ग)

मधुकः । केलिसं ? (घ)

प्रथमः । स क्खु हलिद्दावट्टसमलदो पलाइअ पढ़मं कमलमिलं गदो, कालान्तले तह्नि वि जवणेहिं भिसं आक्कन्ते सपलिवालो ज्जेव तदो णिग्गदुअ गिलिदो गिलिं अड़विदो अड़विं दिहरकालं पज्जड़िअ चम्पण-गद-चोन्दे ग्गामे अह्माणं घले ज्जेव उवट्‌ठिदो । (ङ)

(क) मधुक ! यत् पृच्छसि, तत् शृणु ; अस्माकं राजा खलु महानेव भद्रलोकः ।

(ख) किं तत्र प्रमाणम् ।

(ग) चरित्रं चरित्रम्, अस्य खलु अलौकिकं मधुरं चरित्रमेव भद्रत्वे प्रमाणम् । (घ) कीदृशम् ।

मधुकः । (सखेदम्) साहुआ ! लाआ वि एलिसं कट्टं सहिदुं सक्कणोदि । (च)

साधुकः । तवस्सी, महन्ते ज्जेव तवस्सी लाआ । (छ)

मधुकः । होदु, तदो ? (ज)

साधुकः । तदो मह तादो तस्स ववहालेण सिणेहपलवसो हुविअ भिसं आदलं कलन्तो मां चिलभिच्चं कदुअ सअं वि तह ज्जेव थिदो । (झ)

मधुकः । साहुआ ! तहिं तुह तादो वि अणाधं पालअन्तो धम्मिओ ज्जेव णिसेओ । (ञ)

साधुकः । होदु, तुमं कुदो आअदो ? (ट)

---

(ङ) स खलु हरिद्राघट्टसमरात् पलाय्य प्रथमं कमलमीरं गतः, कालान्तरे तस्मिन्नपि यवनैर्भृशमाक्रान्ते सपरिवार एव ततो निर्गत्य गिरितो गिरिम्, अटवितः अटविं दीर्घकालं पर्य्यट्य चम्पनगतचौन्दे ग्रामे अस्माकं गृह एव उपस्थितः ।

(च) साधुक ! राजापि ईदृशं कष्टं सहितुं शक्नोति ।

(छ) तपस्वी, महानेव तपस्वी राजा ।

(ज) भवतु, ततः ?

(झ) ततो मम तातस्तस्य व्यवहारेण स्नेहपरवशो भूत्वा भृशमादरं कुर्व्वन् मां चिरभृत्यं कृत्वा स्वयमपि तथैव स्थितः ।

(ञ) साधुक ! तस्मिन् तव तातोऽपि अनाथं पालयन् धार्म्मिक एव निर्णयः ।

(ट) भवतु, त्वं कुत आगतः ?

मधुकः । सुण, इमस्स वि णअलस्स वेट्टणे जवणसेणा-तुवलदि त्ति सुणिअ जदा लाआ चप्पणगदचोन्दग्गामदोवि णिग्गदुअ इमस्सिं गिलिदुग्गे आअच्छदि, तदा भिल्लसेणावइणा लगुणा आणइअ हगे लस्सो दिस्सो । (ठ)

साधुकः । ता महुआ ! इमस्सिं मिवालगिलिदुग्गे अजाणिदमग्गे सपलिवालो ज्जेव लाआ पलमणिव्वुदो चिट्ठदि । एत्थ दाव जवणगन्धो वि ण हुविस्सदि । (ड)

मधुकः । (सगर्व्वम्) ता आअच्छदु जवणसेणा, अह्मे भिल्लाओ सुलेहिं सलेहिं भिन्दिअ भिन्दिअ जवणलासिं समाहित्थं कलेह्म । (ढ)

साधुकः । अले ! लाआ सअं ज्जेव अन्तलान्तला ससेणिओ णिपड़िअ आअदां जवणसेणां संहलदि । (ण)

---

(ठ) शृणु, अस्यापि नगरस्य वेष्टने यवनसेना त्वरत इति श्रुत्वा यदा राजा चप्पनगतचौन्दग्रामादपि निर्गत्य अस्मिन् गिरिदुर्गे आगच्छति, तदा भिल्लसेनापतिना रघुणा आनीयाहं राज्ञो दत्तः ।

(ड) तत् मधुक ! अस्मिन् मिवारगिरिदुर्गे अज्ञातमार्गे सपरिवार एव राजा परमनिर्वृतस्तिष्ठति । अत्र तावत् यवनगन्धोऽपि न भविष्यति ।

(ढ) तदागच्छतु यवनसेना ; वयं भिल्लाः शूलैः शरैश्च भित्त्वा भित्त्वा यवनराशिं समाधिस्थं कुर्म्मः ।

(ण) अरे ! राजा स्वयमेव अन्तरान्तरा ससैनिको निपत्य आगतां यवनसेनां संहरति ।

मधुकः। अम्मो! अह्माण' लाआ महासुले। ता एसो ज्जेव सुलधम्मो। (त)

साधुकः। होदु। महुआ! अहिआ वेला सञ्जादा। ता एहि कज्ज' कलेह्म। (थ) (इति कटिदेशे करण्डीं बद्धा फलपादपमारोहति, शाखातः शाखां गच्छन् फलान्याहृत्याहृत्य करण्डीं पूरयति च)

मधुकोऽपि। (कटौ करण्डीं लम्बयित्वा पुष्पपादपमधिरोहति, शाखातः शाखां गच्छन् पुष्पाणि सञ्चित्य सञ्चित्य करण्डीं पूरयति च)

साधुकः। महुआ! मह कज्ज' सम्पस्स'। (द) (इति फलपादपादवरोहति)

मधुकः। साहुआ! मह वि कज्ज' सम्पस्स'। (ध) (इति पुष्पपादपादवरोहति)

उभौ। (शुष्काणीन्धनानि सञ्चिनुतो बध्नीतश्च। ततः साध्यसाधनानन्देन सनृत्य' गायतस्तत्तत् कार्य्यञ्च कुरुतः)

साधुकः। हगे गइस्स' सादुफलाइ'। (न) (फलकरण्डीं स्पृशति)

(त) अहो! अस्माक' राजा महाशूरः। तदेष एव शूरधर्म्मः।

(थ) भवतु। मधुक! अधिका वेला सञ्जाता। तदेहि कार्य्यं कुर्व्वः।

(द) मधुक! मम कार्य्य' सम्पन्नम्।

(ध) साधुक! ममापि कार्य्य' सम्पन्नम्।

मधुकः । हगी णइस्सं सव्वउलाइं । (प) (पुष्पकरण्डीं स्पृशति)

साधुकः । तुमं गिह्राण पुप्फकलण्डीं । (फ) (पुष्प-करण्डीं दर्शयति । मधुकश्च गृह्णाति)

मधुकः । तुमं गिह्राण फलकलण्डीं । (ब) (फलकरण्डीं दर्शयति । साधुकश्च गृह्णाति)

साधुकः । दालु गेह्लिअ सोस्से कदुअ । [भ] [काष्ठभारं शीर्षे स्थापयति]

मधुकः । पलसूं णइअ हत्थे धलिअ । [म] [परशुद्वयं हस्तेन धारयति]

साधुकः । धलं चलेह्म दाणं कलेह्म । [य] [चलति]

मधुकः । पलं सिणाह्म तदो खाआह्म । [र] [व्रजति]

इति निष्क्रान्तौ ।

---o---

## प्रवेशकः ॥०॥

---o---

(न) अहं नेष्यामि स्वादुफलानि । (प) अहं नेष्यामि सद्दकुलानि ।

(फ) त्वं गृहाण पुष्पकरण्डीम् । (ब) त्वं गृहाण फलकरण्डीम् ।

(भ) दारु गृहीत्वा शीर्षे कृत्वा ।

(म) परशु नीत्वा हस्ते धृत्वा ।

(य) गृहं चलावः दानं कुर्वः ।

(र) परं स्नावः ततः खादावः ।

अथ प्रविशति मिवारशैलसानुवने पर्णकुटीराङ्गने सपरिवारः प्रतापसिंहः ।

प्रताप। देवि! समाश्वसिहि, न खलु केवलमहमेव वनवासमकार्षम्। अपि तु—

नलस्य रामस्य युधिष्ठिरस्य
वनेषु वासं सुचिरादकार्षुः ।
जायावियोगोऽपि बभूव तेषां
नात्येति लोको नियतेर्नियोगम् ॥१॥

महिषी। अज्जउत्त! भवदो विहवविअमकिदं एरिसं कट्टं पेक्खिअ दिज्जदि मह हिअअं। (क)

प्रताप। देवि! दारिद्र्यं नाम सर्वशान्तिनिदानम्। अतएव हि मनीषी सर्वं सन्न्यस्यन् वृणोति दारिद्र्यम्। वदन्ति च तत्त्वज्ञाः—

निस्वः स्वल्पेन सन्तोषी गर्वोद्वेगमदच्युतः ।
केवलोदरचिन्ती च वरमाढ्यादनोद्दृशात् ॥२॥

तत्राहन्तु—

नहि स्वल्पेन सन्तोषी गर्वोद्वेगमदान्वितः ।
सदा साम्राज्यचिन्ती च निस्वो विश्वविलक्षणः ॥३॥

महिषी। ता किं तुए सव्वदा ज्जेव एसा चिन्ता करीअदि? (ख)

(क) आर्यपुत्र! भवतो विभवविगमकृतमीदृशं कष्टं प्रेक्ष्य दीर्य्यते मम हृदयम्।

प्रताप। सर्व्वदा कर्त्तुं कथं शक्यते, देवार्च्चनया निद्रया च भूयानेव समयो व्याहन्यते।

महिषी। अज्जउत्त! सिणाणं असणं सअणञ्च जधाकालं अणणुचिट्ठदो तुह कधं णाम भविस्सदि देहरक्खा। (ग)

प्रताप। प्रिये! जन्मभूमावरक्षितायां देहरक्षा निष्प्रयोजनैव। तत् किमित एव भवत्यपि सहते दुःसहमेव क्लेशम्?

महिषी। एत्थ किं णाम अत्थि कधणिज्जं, बिम्बं अणुवट्टदि हि छाआ। (घ)

प्रताप। देवि! अत्र खल्ववधीयतामयं महीयानाश्वासः।

उत्साहियोद्बलवन्मनोबलं
युक्तस्य योगस्य तपस्तपस्विनः।
अकुर्व्वतो वापि कलेवरक्रियां
भवत्यलं जीवनकारणं ध्रुवम् ॥४॥

महिषी। ता किं राअभवणादो वि तुह एदं गिरिवणं सोहणं पड़िभादि? (ङ)

प्रताप। [स्वगतम्] हन्त! आसीदियमस्मच्चित्त-

---

(ख) तत् किं त्वया सर्व्वदैव एषा चिन्ता क्रियते।

(ग) आर्य्यपुत्र! स्नानमशनं शयनञ्च यथाकालमननुतिष्ठतस्तव कथं नाम भविष्यति देहरक्षा?

(घ) अत्र किं नामास्ति कथनीयम्, बिम्बमनुवर्त्तते हि छाया।

(ङ) तत् किं राजभवनतोऽपि तवेदं गिरिवनं शोभनं प्रतिभाति?

वृत्तेरप्योजस्विनी। किन्तु क्रमेण दुःसहं क्लेशमसहमाना सम्प्रति विमनायते। तदस्याः खल्वीदृशी दशा परं परमुपचीयमाना भाविनी मे कार्य्यसिद्धेर्महायानन्तरायः। तदिमामित्थं सुमनीकरोमि। [प्रकाशम्] देवि! अत्र कः सन्देहः?

रजोगुणविवर्द्धिनी विविधकामसञ्चारिणी
विलासमदकारिणी व्यसनिनी महीभृत्पुरी।
शमोपरमकारणाद्विमलसत्त्वसम्पादनात्
मनीषिमुनिसेविताद्गिरिवनान्निहीना ध्रुवम् ॥५॥

महिषी। एसो क्खु विवेओ विराइणो जणस्स, अह्मे तु राअसाअरमग्गा। (च)

प्रताप। तर्हि किल रागिणं जनमेव पृच्छामि। (नेपथ्याभिमुखमवलोक्य) इन्दिरे! इतस्तावत्।

महिषी। (सहासम्) ता किं बालिआ तुह पमाणं? (छ)

प्रताप। महिषि! किं ब्रवीषि। बाल्यं खलु नित्यसत्यानुवर्त्ति। (पुनर्नेपथ्यमवलोक्य) अम्ब! मा विलम्बस्व।

नेपथ्ये। ताद! इअं जामि। हला सहीओ! तुह्मे चिट्ठध, अहं तादं पेक्खिअ दाणिं ज्जेव आअच्छामि। (ज)

(च) एष खलु विवेको विरागिणो जनस्य, वयन्तु रागसागरमग्नाः।

(छ) तत् किं बालिका तव प्रमाणम्?

(ज) तात! इयं यामि। हला सख्यः! यूयं तिष्ठत, अहं तातं प्रेक्ष्य इदानीमेवागच्छामि।

ततः प्रविशति धूलिधूसराङ्गी वन्यकुसुमभूषणा शाटी-
परिधाना चेन्दिरा ।

प्रताप । (सस्नेहम्) एहि अम्ब ! (हस्तौ प्रसारयति)

महिषी । (विलोक्य सस्नेहहासकौतुकम्) चिट्ठ
दुव्विणीदे ! एरिसगात्तसंजोएण महाराअगात्तं वि कलुसी-
करिस्ससि । (झ) (धर्त्तुं गच्छति ।)

इन्दिरा । (किञ्चिदपसृत्य सभयम्) ताद ! अम्बा
मारेदि । [ञ]

प्रताप । मा भैषीः । [इन्दिरामुपसर्पन्] देवि ! ईदृक्
कलुषीकरणं महाभागधेयफलं जीवानाम् । येन हि—

दृष्टेः सुधा दूरत एव दृष्टा
स्नेहेन चित्तं स्तिमितीकरोति ।
दूरे हि चिन्ता परहस्तपिष्टा
परस्य वक्त्रं कुरुते जलार्द्रम् ॥६॥

[इत्युपसरन्निन्दिरामङ्के निधाय] अहो स्पर्शः !

अतसिकुसुमवर्णा धूलिकीर्णा समन्तात्
अयस इव लवामा हैमनी पुत्तलीयम् ।
मृदुललितगात्री बालपुत्री हृदग्ने:
शमयति परितापं शीतलस्पर्शतो मे ॥७॥

(झ) तिष्ठ दुर्विनीत ! ईदृशगात्रसंयोगेन महाराजगात्रमपि
कलुषीकरिष्यसि ।

(ञ) तात ! अम्बा मारयति ।

[इन्दिरायाश्चिवुकं धृत्वा] इयन्तं समयं क्व खल्वासीः ?

इन्दिरा। खेलाट्ठाणे। [ट]

प्रताप। कैः सह खेलसि ?

इन्दिरा। भिल्लवालिआहिं। [ठ]

प्रताप। तन्मामपि खेलायां गृहाण।

इन्दिरा। [सहासम्] तुमं पुरिसो। (ड)

प्रताप। (सहासकौतुकं महिषीं दर्शयन्) तर्हीमां गृहाण।

इन्दिरा। (विहस्य) इअं वि वुड्ढा। (ढ)

दम्पती। (सकौतुकं हसतः)

इन्दिरा! अहं जामि। (ण) (उत्थातुमिच्छति)

प्रताप। (इन्दिरां गाढ़माश्लिष्य चिबुकं धृत्वा) दुर्विनीते! ब्रूहि—अस्मिन् गिरिवने त्वमारमसि ? कमलमीरभवने वा ?

इन्दिरा। इमस्सिं गिरिवणे। (त)

प्रताप। (सकौतुकहासम्) कुतः ?

इन्दिरा। एत्थ धूली पावीअदि, पुप्फं लब्भीअदि, णिज्झरजलं पेक्खीअदि, पक्खिरवो अ सुणीअदि। (थ)

प्रताप। (सहासगर्व्वम्) महिषि! जितं मया।

(ट) खेलास्थाने। (ठ) भिल्लबालिकाभिः। (ड) त्वं पुरुषः।

(ढ) इयमपि वृद्धा। (ण) अहं यामि।

(त) अस्मिन् गिरिवने।

(थ) अत्र धूलिः प्राप्यते, पुष्पं लभ्यते, निर्झरजलं प्रेक्ष्यते, पक्षिरवश्च श्रूयते।

महिषी। (सहासम्) एसा वालिआ अत्तणो मणोणुउलं भणदि। (द)

प्रताप। देवि! उत्तममधमं वा मनोऽनुकूलप्रतिकूलतयैव सर्व्वस्य। पश्य—

तद्धि तस्योत्तमं वस्तु येन यः परिहृष्यति।
हालिको गृहपर्य्यङ्कं हित्वा शेते तृणेऽङ्गने ॥८॥

महिषी। (महासाटोपम्) ता अहं अमरं आमन्तेमि। (ध)

प्रताप। स तु विलासो विलासविषयं कमलमीरमिव सर्व्वथा शोभनं समर्थयिष्यति।

महिषी। ता किं विलासो दोसपिसुणो? (न)

प्रताप। न खलु विलासो नवोदितयौवनस्य दोषपिशुनः। अपि तु—

पुष्पे विकासस्तरुणे विलासः
शिशौ चलत्वं स्थविरे स्थिरत्वम्।
नयः प्रवीरे विनयश्च धीरे
सङ्गच्छते शोमति शोभते च ॥९॥

किन्तु तव सङ्गच्छमानः शोभमानश्चाप्यसौ विलासः पदविरुद्धश्चेद्दोषपिशुन एव। पश्य—

प्रसाधनं वृत्तिवयोऽनुवर्त्ति
नेयं विहेयं विपरीतमेव।

(द) एषा बालिका आत्मनो मनोऽनुकूलं भणति।

(ध) तदहममरमामन्त्रयामि।

यूनो गृहस्थस्य यथा न चोरं
तथा सुचेलस्य मुनेर्न योग्यम् ॥१०॥

भवतु । आह्वयतामायुष्मान् ।

महिषी । (नेपथ्याभिमुखमवलोक्य) वच्छ ! अमर ! इदो दाव । (प)

पुस्तकहस्तो नवयौवनः सुन्दरमूर्त्तिरमरसिंहः प्रविश्य । किमम्ब !

महिषी । (सहासकौतुकम्) कधेहि तस्स कमलमीरस्स इमस्स गिरिवणस्स अ केरिसं अन्तरं ? (फ)

अमर । (सोल्लुण्ठनहासम्) सूर्य्यज्योतिरिङ्गणयोः, सुवर्ण-लौहयोः, सरोजशैवलयोश्च यादृशमन्तरम् ।

महिषी । (सहासकौतुकमिव) ता पट्टं कधेहि । (ब)

अमर । (सहासमेव) एतदपि प्रच्छनीयम् । सा राजधानी, इयं पशुपक्षिस्थली, स विपश्चितां निवासः, अयं तिरश्चामावासः ; स स्वर्गः, अयञ्च निरय इति ।

महिषी । (सहासकौतुकमेव) अज्जउत्त ! दाणिं केण जिदं ? (भ)

(न) तत् किं विलासो दोषपिशुनः ?

(प) वत्स ! अमर ! इतस्तावत् ।

(फ) कथय तस्य कमलमीरस्य अस्य गिरिवनस्य च कीदृशमन्तरम् ।

(ब) तत् स्पष्टं कथय ।

(भ) आर्य्यपुत्र ! इदानीं केन जितम् ?

प्रताप। (सहासमिव) इदमहमवादिषं पूर्व्वमेव। (तद्धि तस्योत्तमं वस्तु···इत्यादिकं पुनः पठति)

अमर। इन्दिरा किं ब्रवीति ?

महिषी। ता पुच्छ। (म)

अमर। (उपेत्य इन्दिरायाश्चिवुकं धृत्वा सहासम्) अये! त्वमनयोः कतरत् किल शोभनं मन्यसे ?

इन्दिरा। एदं गिरिवणं। (य)

प्रताप। (सहासम्) देवि! इदानीमावयोः समानः पक्षः।

महिषी। बालिआ किं बुज्झदि। (स्वगतम्) हन्त! सामि-सन्ताणेहिं सद्धं हासकोदुएण खणमेत्तंवि निव्वुदह्मि। (र)

प्रताप। (स्वगतम्) सिद्धं नः समीहितम्, देव्याः प्रसन्नमनः। (प्रकाशममरं प्रति) किमिदं पुस्तकं ते हस्ते ?

अमर। महाकविकालिदासप्रणीतं रघुवंशम्।

प्रताप। इदानीमिदमेवाधीषे ?

अमर। पाणिनीयं शब्दशास्त्रमधीत्याधुना खल्विदमध्येतुं प्रवृत्तः।

प्रताप। आयुष्मन्! इदं तावत् स्मर्त्तव्यम्। यत्—

(म) तत् पृच्छ। (य) एतत् गिरिवनम्।

(र) बालिका किं बुध्यते। हन्त! स्वामिसन्तानैः सार्द्धं हास-कौतुकेन क्षणमात्रमपि निर्वृतास्मि।

सूर्य्यवंशप्रसूतस्य शौर्य्यं क्षत्रस्य सर्व्वदा ।
शिक्षणीयं प्रयत्नेन विप्रस्येवादिमं तपः ॥११॥

अमर । (सविनयम्) सर्व्वथा स्मरिष्यामि ।

ततः प्रविशतः प्रत्येकं शिरसि काष्ठभारं हस्ते च करण्डोमादाय साधुकमधुकौ ।

साधुकः । (काष्ठभारं करण्डोञ्च भूमाववतार्य्य) एसो कट्ठभालो इअञ्च फलकलण्डो । (ल)

मधुकः । (तथैव कृत्वा) अअं दालुभालो, एसा अ पुप्फ-कलण्डो । (व)

प्रताप । (प्रत्येकं पारितोषिकं ददाति)

साधुकमधुकौ । (ससन्तोषं गृहीत्वा प्रणम्य च निष्क्रान्तौ)

नेपथ्ये वंशीध्वनिः ।

प्रताप । (श्रुतिमभिनीय) देवि ! इतः सूरो दूरमधिरूढ़ो गगनस्य, ततश्च सेनापतिर्मद्दर्शनमिच्छन् वंशीरवेण निजमागमनं सूचयति । तत्त्वं भवनं प्रविश्य क्रियतां पूजनायोजनमाहार्य्यनिर्म्माणञ्च ।

महिषी । दुवे वि पढ़मं ज्जेव करिअ इदो आअदा । (श)

प्रताप । तर्हि गत्वा प्राणिमावभ्यवहारय, अहमपि सेना-पतिना कृतसंलापो यास्यामि मध्यन्दिनक्रियासम्पादनाय ।

---

(ल) एष काष्ठभारः, इयञ्च फलकरण्डो ।

(व) अयं दारुभारः, एषा च पुष्पकरण्डी ।

(श) द्वे अपि प्रथममेव कृत्वा इत आगता ।

महिषी। एव्वं भोदु। (ष)

अमर। (सहास' पुष्पकरण्डीमिन्दिराशिरसि निधाय स्वयञ्च हस्तयोः काष्ठभारद्वयं गृहीत्वा निष्क्रान्तः)

महिषी। (फलकरण्डीं गृहीत्वा निष्क्रान्ता।)

प्रताप। (प्रतिवंशीरवेण सेनापतिमामन्त्रयति)

साटोपं प्रविश्य सेनापतिः। जयति जयति देवः। (प्रणमति)

प्रताप। (सोत्कण्ठं प्रतिप्रणम्य) अभिधीयतामद्यतनी वार्त्ता।

सेना। अद्य खलु प्रभातायामेव विभावर्य्यां भगवता विवस्वता सार्द्धमेव प्राच्यामभ्युदितं यवनबलम्।

प्रताप। (सोत्साहम्) ततः ?

सेना। ततः प्रथममेवास्माकं भिल्लसैनिकैस्तुङ्गशैलाङ्गा-न्निरन्तरमार्गणगणैर्गगनमार्गमावृत्य प्रहर्त्तुमुपक्रान्तम्।

प्रताप। (सहर्षम्) साधूपक्रान्तम्। अनन्तरम्।

सेना। यवनैरपि शैलसुषिरेषु प्रच्छन्नान् प्रति मोघमेव नालीकगुलिकावर्षणमारब्धम्। तेषु चानेके निद्रात्यागकाल एव महानिद्रां भेजिरे। परे च—

चर्म्मावृताङ्गा यवनास्तदानीं

तान् भिल्लसेनाविशिखाननेके।

---

(ष) एवं भवतु।

वृषा इवादाय घनाब्दवृष्टिं
मिवारशैलान्तिकमागता द्राक् ॥१२॥

प्रताप। (साशङ्कम्) ततः ?

सेना। ततश्च भिल्लैः पाषाणपातेन चत्रियैश्चाविभूय शूल-भल्ल-करवाल-करालाघातेन च्छिन्नभिन्नाः क्रमेणापक्रान्ताः।

प्रताप। (सानन्दोल्लासम्) साधु साधु। दिगन्तराणि के रक्षन्ति।

सेना। अवाचीं शक्तसिंहः, प्रतीचीं शम्भुसिंहः, उदीचीञ्च भीमसिंहः।

प्रताप। (सानन्दम्) साधु, यथास्थानं वीराणामिदमवस्थानं महद्देवाश्वासस्थानम्।

सेना। देव! विलम्बे विपत्पातः सम्भाव्यते।

प्रताप। तत्त्वरस्व स्वपदमेव सनाथीकर्त्तुम्।

सेना। (प्रणम्य द्रुतं निष्क्रान्तः)

प्रताप। (विचिन्त्य सखेदम्) गरीयानर्थाभावः। तत् कथमीशो भवेयं नालोकं वृहन्नालोकञ्च निर्म्मातुं क्रेतुं वा।

नेपथ्ये इन्दिराया आकुलक्रन्दनध्वनिः, तरुगात्रे दण्डताड़नशब्दः, हट्टो हट्टो (स) इति महिष्या आक्षेपरवश्च।

प्रताप। (आकर्ण्य सोद्वेगम्) किं नाम संवृत्त-मन्तर्भवने ? (द्रुतं निष्क्रान्तः)

---

(स) हाधिक् हाधिक् !

ततः प्रविशति भोजनासने दण्डायमाना सोच्छ्वासं रुदती
चेन्दिरा, दण्डेन तरुं ताड़यन्नमरसिंहः, दर्व्वीहस्ता
महिषी, सष्कुलीमुखः पादपस्कन्धारूढ़ो
वनविड़ालश्च।

उन्मुखाः सर्व्वे वनविड़ालं पश्यन्ति।

ससम्भ्रमं प्रविश्य प्रताप। किं नाम संवृत्तम्?

अमर। आयुष्मती भोक्तुमासीना, अहञ्च तत्रोद्युञ्जानः, ततो यावदम्बा श्रीमत्याः सष्कुलीं प्रदाय परावर्त्तते, तावदेवायं दुष्टो वनमार्ज्जारः कुतोऽप्युपेत्य तामस्या हस्तादाच्छिन्दन्नुत्प्लुत्यामौ पादपस्कन्धमारूढ़ः। (इति दण्डं विहाय वनविड़ालं प्रति लोष्ट्रं क्षिपति)

प्रताप। (वनविड़ालं विलोक्य) अये! विरमास्याः पुनराहरणात्। पशूच्छिष्टं खल्वनाहार्य्यं मानुषाणाम्। (महिषीं प्रति) तत् किमिकैवेयं निरमायि भवत्या?

महिषी। अधइं। (ह)

प्रताप। तदपरा अपि झटिति निर्म्मीयन्ताम्।

महिषी। घासलेसो वि णत्थि। (च)

प्रताप। फलानि दीयन्ताम्।

इन्दिरा। फलाइं अच्चन्तं ज्जेव कड़ुकसाआइं। (क)

अमर। ललिते! नन्वद्यतनान्यतीवस्वादुफलानि। तदयमश्नीमस्त्वमप्यशान। (इतोन्दिराया हस्ते फलं ददाति)

---

(ह) अथकिम्। (च) घासलेशोऽपि नास्ति।

(क) फलानि अत्यन्तमेव कटुकषायाणि।

प्रताप। (सविस्मयखेदमात्मगतम्) हन्त! कः खल्वयं मे ग्रहः, युद्धं तावद्भागधेयेनापि सार्द्धम्? नन्वियमलौकिकी मूढ़ता। (किञ्चिद्विभाव्य)

प्राज्यं राज्यं विभवि नगरञ्चाध्यकारि द्विषद्भिः
प्राया हृद्या लयमुपगताः सर्व्वथैवाम्मि निस्वः।
जायापत्यान्यपि सुरपुरं यातुमुद्युञ्जतेऽस्मिन्
मामद्यापि त्यजसि नहि किं दुर्द्दमाशापिशाचि! ॥१३॥

अहोवत, क्व ननु कमलमोरं सर्व्वसम्पन्मनोज्ञं
क्व नु शिखरिवनं वा भीममापन्निदानम्।
नरपतिपरिवारा वासयोग्याः किमस्मिन्
मरुभुवि नलिनानि प्राणितुं नेशते हि ॥१४॥

(महिषीं विलोक्य सखेदम्) अहह! पूर्व्वमिमां न खलु नाममात्रेण गौरीम्, अपि तु वर्णतो गौरीम्, वस्तुतोऽपि च गौरीमेवान्वभवम्; इदानीन्तु परिधानशाटीमिव वर्णतो मलिनां वस्तुतोऽपि च मलिनामेवानुभवामि। अपि च पूर्व्वमिमामसूर्य्यम्पश्यामपश्यम्, अधुना तु प्रायादिमां सूर्य्यवश्यामिव पश्यामि। (अमरमालोक्य) हा धिक्, अयमपि कुमारः खल्वमरो निरन्तरममरकुमार इव तदानीं राजधान्यां रराज; साम्प्रतन्तु असुरेणेव दारुणेन दैन्येनात्रमन्नः सम्पन्नः। हा हन्त! इयमपि कमलकलिकेव कोमलकलेवरा कन्या तुषारपातेनेव दुःसहक्लेशपातेन दिने दिने परिम्लाना सञ्जाता। (इति सविषादं चिन्तां नाटयति।)

इन्दिरा । (रुदतीं मातरमालोक्य मुक्तकण्ठं रोदिति)

प्रताप । (विलोक्य सवैक्लव्यम्) देवि ! देवि ! मा रोदीः, स्वयमाश्वस्य समाश्वासयैनाम् । (अमरं प्रति) आयुष्मन् ! पुमानसि बलवान्, तत् सान्त्वय तावदबले । (इन्दिरामङ्के निधाय) स्वर्णप्रतिमे ! समाश्वसिहि । (सोच्छ्वासखेदम्) भवतु । अद्यैव विधास्यामि युष्माकं दुःखावसानम् । इदानीमेव प्रेषयामि सन्धातुकामो यवनपतौ सन्धिपत्रम् । तदागच्छत यूयम्, अन्तर्गेहमेव गच्छामः ।

अमर । (दिगन्तरमवलोक्य स्वगतम्) अद्य खाद्यं हरन्नयमाखुभुगस्माकं दुःखभुगेव संवृत्तः । तत् सुष्ठूक्तं कालिदासेन—

"......विषमप्यमृतं क्वचिद्भवेत्
अमृतं वा विषमीश्वरेच्छया ॥"

इति निष्क्रान्ताः सर्व्वे ।

—:०:—

## वनवासो नाम पञ्चमोऽङ्कः ॥०॥

———०———

## षष्ठोऽङ्कः ।

——ः०ः——

अथ प्रविशति कालीशैलसन्निहितमन्दिरालिन्दे शान्तिशरणमिश्रो जपमालाहस्तो हर्षोत्फुल्लवदनः सुप्रभदेवश्च ।

शान्ति । (विलोक्य) स्वागतमुपाध्यायस्य ? इदमासनमधास्यताम् । (इत्यभिवादयते)

सुप्रभ । (देवतां प्रणम्य प्रत्यभिवाद्य नात्यन्तिकोपविश्य च) कर्हि भवान् प्रत्यावृत्तः ?

शान्ति । गतेऽह्नि मध्यन्दिने । अथ भवान् ?

सुप्रभ । सप्ताहं यावत् ।

शान्ति । (सुप्रभस्य मुखमवलोक्य सकौतुकम्) तत्-कथमत्रभवन्तमानन्दसरस्वन्तं सन्तरन्तमिवावलोकयामि ।

सुप्रभ । तदामूलतः श्रूयताम् ।

शान्ति । (सौत्सुक्यम्) अवहितोऽस्मि ।

सुप्रभ । जानास्येव, यथा तदानीं हरिद्राघट्टसङ्गरे यवनैर्विजयवैजयन्तीलाभेन महाराजस्तस्मादपसरन्नस्मिन्नुदयपुर एव तावदुदयमुपेत्य स्थितः । दारुणवर्षागमाच्च नानारोगागमेन देशस्य दुर्गमतया च यवनगणोऽपि प्रस्थितः । वर्षान्तरे च वर्षागमादतिपूर्व्वमेव पुनर्यवनैरस्मिन्नप्याक्रान्ते भवान्

वाराणसीम्, अहञ्च प्रयागं प्रस्थितः। सपरिजनो महाराजश्चास्मान्निर्गतः।

शान्ति। इयन्तमुदन्तमधिगत एवास्मि।

सुप्रभ। ततश्च सपरिजन एव महाराजो दीर्घकालं ग्रामतो ग्रामं गिरितो गिरिमटवीतश्चाटवीं पर्य्यटन् तत्र तत्रैव यवनैरनुसन्धायाक्रम्यमाणो मिवारशैलसानुवने निर्म्मितपर्णकुटीरेषु सुरक्षितो नित्रमनुशेषक्लेशसहिष्णुर्नल-राम-युधिष्ठिरानपि तदानीमतीयाय।

शान्ति। (सखेदम्) हन्त! दुरतिक्रम एव नियतिनियोगो जीवानाम्।

चिरचारुतरुस्वस्तो व्याकुलो वकुलव्रजः।
विशीर्णश्च विकीर्णश्च वनगैरनलानिलैः॥१॥

सुप्रभ। उद्भावितं तावदृदृश्यमेव सादृश्यं मिश्रेण। भवतु। ततः कदाचिन्माध्यन्दिने तादृशदशावशेन महिषीनिर्म्मितां घासमयकुलीमिन्दिराहस्तादाच्छिन्दन्नुत्प्लुत्य पादपमारूढो वनविड़ालः। तदानीञ्चेन्दिरा मुक्तकण्ठमरोदत्। महिषी च सोत्कासमस्त्रमस्त्रंसरत्। अमरश्च दण्डेन तं तरुमताड़यत्। ईदृशविप्लवकाले च महाराजस्तत्र सन्निधाय प्रतीकारोपायमपश्यन् परं निर्व्वेदमापन्नस्तदानीमेव हि सन्धातुकामः प्रेषयामास यवनपतौ पत्रम्।

शान्ति। (सविस्मयम्) पुरुषसिंहेन सन्धित्सुनैव प्रेषितं पत्रम्!

सुप्रभ। अहो तदानीं खल्वरुन्तुदो निर्व्वेदः पुरुषसिंहस्य। तथा च—

परिजनस्य समीक्ष्य सुदुर्दशां
परमकार्य्यमपि क्रियते सता।
जलधिमन्थिसुरासुरसङ्कटे
पशुपतिर्हि पपौ विषमं विषम्॥२॥

शान्ति। भवतु तावत्। परावीनः को वृत्तान्तः?

सुप्रभ। वादसाहस्तु प्राप्तपत्रः प्रथमं प्रतापप्रार्थनां प्रत्येतुमेव नार्हति स्म; पश्चात्मनैवाक्षरपरिचयात् विस्मयानन्द-कुतूहल कोलाहलि-बहुजन-प्रत्यायनाच्च प्रत्ययमुपेतो निर्दिदेश राजधान्यां महोत्सवमनुष्ठातुम्।

शान्ति। (सविषादमिव) प्राप्तकालमेवानुष्ठानं वादसाहस्य।

सुप्रभ। परञ्च परिषत्कविं पृथ्वीराजमाहूय देवप्रतिमि देवभाषयैवानुरोधः समीचीन इति तद्भाषयैव पत्रं रचयितुं रोचयामास। पृथ्वीराजश्चान्तर्दहन् महाविषादं वहिश्च प्रकाशयन् परमं प्रसादं श्लेषेण पत्रं विरचय्य प्रादर्शयत्, वादसाहेन च हृष्टमुररीकृतञ्च।

शान्ति। (सकौतुकम्) स्मरति चेदुपाध्यायः श्रावयतु माम्।

सुप्रभ। श्रूयताम्—

"श्रीमन्महाराजप्रतापसिंह! स्वस्ति ते सर्व्वाङ्गीनमेवास्ताम्। दिल्लीनगरादिदं जातिवर्णबन्धुः सनिर्बन्धमेवानुरुन्धे भवन्तम्।

कृत्यस्ते प्रस्तुतः सन्धिर्दिल्लीशेन च सम्मतः ।
सम्भाव्यमानः सहसा सर्व्वेषाञ्चात्र नो मतम् ॥३॥

अपि च,

एको हि दीपो ज्वलतोह नस्त्वं
तेजस्वितां तत् परिहाय पूर्व्वाम् ।
सर्व्वोऽह मानस्थितिमान् भवाशु
संग्रामचेष्टाविरतश्च भूयः ॥४॥

भवदीयः श्रीपृथ्वीराजवर्म्मा ।"

शान्ति । (सहर्षोल्लासम्) साधु साधु, चमत्कारिणी रचना-चातुरी । सुगमसुन्दरी भाषा, अथ च विपरीतार्थयोरभङ्गः सभङ्गश्च श्लेषः सर्व्वथैव हृदयाश्लेषी । महाकवेर्माघस्य शिशुपालवधकाव्य एव षोड़शसर्गे खल्वीदृशः श्लेषो दृश्यते ।

सुप्रभ । अत एव हि भारतेश्वरस्य महासभायां कविपद-मध्यासीनः पृथ्वीराजः ।

शान्ति । आस्तां तावत् । अनन्तरः को वृत्तान्तः ?

सुप्रभ । अनन्तरञ्च वादसाहेन स्वभाषया लिखितं स्वाक्षरप्रमितञ्च मूलं सन्धिपत्रम् इदं पृथ्वीराजपत्रञ्च दूतेन प्रेषितं प्रतापसिंहाय । स चोभयं प्राप्य वादसाहपत्रे दृष्टिमात्रमामर्शयन् नातिप्रसन्नमनाः स्वजातिवर्णप्रेम्णा प्रणिधानेन पृथ्वीराजपत्रं वाचयन् हंसो नीरात् क्षीरमिव तस्य पृथ्वीराजपत्रस्य द्वितीयमर्थमादाय विस्फोरकलग्नः स्फुलिङ्ग इव स्फुरितस्तत्क्षणादेव तेजसा ।

शान्ति । (सहर्षम्) सर्व्वथा सम्भवत्येव । तथा च—

चित्तस्य वृत्तिः सुचिरान्मलिनी
सङ्कुचिता सा कविनाज्वलत् क्षणात् ।
जलेऽनुकूले चलितानिले पुनः
पृष्ठागते याति तरिस्तडिज्जवात् ॥५॥

सुप्रभ । अस्मिन्नेवान्तरे महामन्त्री भीमसिंहः स्वार्ज्जितं सञ्चितं पैतृकञ्च महान्तमर्थराशिमुपादाय तत्रोपस्थाय समर-साहाय्याय महाराजाय सविनयमुपजहार ।

शान्ति । (सानन्दोच्छ्वासम्) ततः ?

सुप्रभ । ततस्तदानीं निस्वोऽपि मिवारेश्वरो विस्मया-नन्दसन्दोहेनान्दोलितहृदयो मन्त्रिणोऽप्यनुग्रहं निग्रहमिव मन्वानः प्रथमं ग्रहीतुमस्वीकुर्व्वन् परञ्च तस्याग्रहातिरेकात् प्रयोजनातिशयात् समयोपयोगाच्च सस्मितं स्वीचकार कृतकृत्य-ञ्चात्मानं मेने ।

शान्ति । नन्वधिगन्तुमिच्छामि कियानसावर्थराशिरिति ।

सुप्रभ । संख्यां नाधिगच्छामि, किन्तु तत्सचिववचने-नाध्यगच्छम्, द्वाविंशतिसहस्रयोधानां चतुर्द्दशाब्दान् यावत् तेनार्थराशिना सुखेनैव पोषणं स्यादिति ।

शान्ति । (सानन्दोन्मादम्) अहो भाग्यं राज्ञः, अहो औदार्य्यमार्य्यसचिवस्य । ततः ?

सुप्रभ । ततश्च झटित्येव युगपदेव तत्सानुवनस्थ एव महाराजो निर्म्मापयामास पूर्व्वाभीष्टं यथेष्टमेव नालीकं

दृष्टमालोकं तदुभिन्नञ्च नानाविधमायुधम्; सङ्गृहीतञ्च स्वदेशाद्विदेशाच्च समरविशारदानां योधानां पञ्चाशत् सहस्राणि।

शान्ति। (सौत्सुक्यम्) अभिधीयतामनन्तरक्रिया।

सुप्रभ। अनन्तरञ्च प्रथमं कमलमीरं परञ्चोदय-पुरमधिकृत्य शोभने सरसि कमलानीव कमलमीरे पूर्व्ववदेव योग्यभोग्येन परिजनान् प्रतिष्ठाप्य महाविक्रमैर्णकैकक्रमेण जनविंशद्दुर्गाण्यध्यकार्षीत्; इदानीञ्च देवीदुर्गमधिकर्त्तु-मुद्युक्तः। तथा च—

एकतो ज्वलनो भावात् समीरश्च द्वितीयतः।
तृतीयतो हविःक्षेपो दग्धन्तेनाञ्जसेन्धनम् ॥६॥

शान्ति। (सानन्दोन्मादम्) उपाध्याय! ईदृशशुभसंवाद-वादिने किं नाम पारितोषिकं ददामीत्यन्विष्यन्नपि न निश्चिनोमि।

सुप्रभ। इदमेव महापारितोषिकम्, यत्, तत्स्वस्त्ययनस्य विफलतामाशङ्क्य तदानीं स्वविषादप्रसवमस्मदन्तरे सञ्चारितवान्; इदानीञ्च तस्य सर्व्वथा सफलतामाकर्ण्य निजानन्दसन्तान-मस्मदन्तरे प्रेषयसीति।

शान्ति। एष मे दृढ़ीयान् विश्वासो यत्, साङ्गं खलु देवार्च्चनमलमेव फलं जनयति।

सुप्रभ। अत्र कः सन्देहः। अभिहितञ्चार्षैः—"साङ्गाद्धि वैदिककर्म्मणः फलावश्यम्भावनियमः" इति।

यान्ति। एष च तस्मात्तृतीयः संवत्सरः। तेन चेदमपि प्रमाणीकृतम्—

"त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते॥"

उभौ। (जानुयुगलं भूमौ विन्यस्य साञ्जलिबन्धम्) मातर्दानवमर्द्दिनि! मर्द्दय तावत् पुनर्दानवान् द्रुतमपसारय च हिन्दुस्थानात्।

इति निष्क्रान्तौ।

—o—

अङ्कावतारः॥०॥

—o—

अथ प्रविशति देवीदुर्गे विलासभवने दुर्गाध्यक्षः
साहवाज खास्तद्वयस्यो मवारकश्च ।

साह । वयस्य ! त्वं खलु नितरामेव लोकतत्त्वनिष्णातः । तद्ब्रूहि कतमस्मिन् वयसि कतमद्वस्तु लोभनीयं मनुष्यस्य ?

मवा । कोमारे मादुणो सिणेहो महुरो रसो अ, जोव्वणे जुवदो विलाससामग्गो अ, वठ्ढए अ धम्मो विस्सामो अ । (क)

साह । तर्हि तावदिदानीमस्माकं यथा युवतयो लोभनीयास्तथा तासामपि वयम् ?

मवा । एत्थ को संसओ । ताणं हि अट्ठगुणो कामो त्ति सुहिओ कधेन्ति । (ख)

साह । अये ! सुधियः खलु धीशून्या एव ।

मवा । (सहासम्) सुहिओ धीसुसाओ, जलणिहओ जलसुसाओ, धणिणो धणसुसाओ, दस्सतमिस्साओ अ तमिस्ससुसाओ । तुम्हे दुग्गज्झक्खाओ जं कधेध, तं ज्जेव सच्चं होदु । (ग)

(क) कौमारे मातुः स्नेहो मधुरो रसश्च ; यौवने युवतिर्विलाससामग्री च, वार्द्धके च धर्म्मो विश्रामश्च ।

(ख) अत्र कः संशयः । तासां हि अष्टगुणः काम इति सुधियः कथयन्ति ।

(ग) सुधियो धीशून्याः, जलनिधयो जलशून्याः, धनिनो धनशून्याः, दर्श-तमिस्राश्च तमिस्रशून्याः । यूयं दुर्गाध्यक्षा यत् कथयथ, तदेव सत्यं भवतु ।

साह । यदि नाम कामो योषाया एवाष्टगुणोऽभविष्यत्, तर्हि तु पुरुष एव वेश्यावृत्तिमकरिष्यत्, प्रसभप्रवृत्तिश्च तस्या एव बहुलं प्राचलिष्यत् । प्रत्युत—

उररीकुरुते न पूरुषं
प्रणयेनाप्यलमर्थिताङ्गना ।
चलनेन तु तं निरस्यति
व्रततिर्वातधुतेव षट्पदम् ॥७॥

परन्त्वियं विश्वविलक्षणा जातिः । तथा च—

सम्मते याति वैमत्यं सरसे विरसायते ।
दक्षिणे च भवेद्वामा रामा चित्रचरित्रिका ॥८॥

मवा । अणत्थं उवालहसि । एसा हि पुरिसत्थं ज्जेव घरदुआरे चिट्ठदि, पुरिसं पेक्खिअ ज्जेव कडक्खेण आमन्तेदि, सादरं पुरिसं गेण्हदि, सअलां ज्जेव रअणीं सन्तोसिअ अ विवज्जदि । (घ)

साह । सखे ! त्वन्तु पण्याङ्गनाविषयं ब्रवीषि । तादृशी तरुणी तु पारतरणिरिव मन्तव्या । तथा च—

अर्थं समादाय दधाति वक्षसि
स्वयं जनान् स्वीकुरुते बहूनपि ।

---

(घ) अनर्थमुपालभसे । एषा हि पुरुषार्थमेव गृहद्वारे तिष्ठति, पुरुषं प्रेक्ष्यैव कटाक्षेणामन्त्रयति, सादरं पुरुषं गृह्णाति, सकलामेव रजनीं सन्तोष्य च विवर्जयति ।

परञ्च निष्काशयते परागमात्
साधारणी स्त्री तरणी च पारिणी ॥९॥

मवा। किं कधेसि। घरतरणी पुरिसं ण आवज्जेदि। (ङ)

साह। विरलम् अतिविरलमेव निदर्शनम्।

मवा। ता कदरा दे रोअदि? (च)

साह। सखे! पण्याङ्गना मूल्यलभ्या निस्नेहा, कुलाङ्गना त्वमूल्या सस्नेहा। तेन च—

स्निग्धा मृदुस्पर्शसुखा मनोरमा
निस्नेहरूचा तु मनोरमैव न।
मनः समाकर्षति वल्लिवल्लरी
शाखा नवीनापि तु नो विजानतः ॥१०॥

मवा। (सकौतुकम्) वअस्स! जाणासि किं जं कुलाङ्गणा कट्टसाज्झा। (छ)

साह। भवतु।

प्रसाध्यमाना सुखदा यथा स्यात्
स्वयन्तु सिद्धा न तथा कदापि।
सञ्चर्व्यमाणा मधुरेक्षुयष्टि-
र्यथा रसालो गलिता तथा न ॥११॥

---

(ङ) किं कथयसि, गृहतरणी पुरुषं नावर्ज्जयति?

(च) तत् कतरा ते रोचते?

(छ) वयस्य! जानासि किं, यत्, कुलाङ्गना कष्टसाध्या।

मवा। (सहासकौतुकम्) ता तुह वल्लहा कुलवहु वि ण दुल्लहा भविस्सदि, किन्तु अत्यप्पओअणं। (ज)

साह। (सौत्सुक्यम्) यावदर्थप्रयोजनम्, तावन्तमेवार्थमासादयिष्यति प्रियवयस्यः।

मवा। (स्वगतम्) एसा क्खु बाहुल्लेण ज्जेव णिव्वोहा धणिस्सेणी। ता पस्सवहु ज्जेव कुलवहु करिअ आणइस्सं। (प्रकाशम्) ता कदा पत्थेसि ? (झ)

साह। सखे! मनःप्रियं खलु विलम्बं न सहते।

मवा। मए क्खु तिस्सि तरुणीओ आणाइअ रक्खिदाओ। ता दाणिं ज्जेव आअदुअ णिच्चं सङ्गीदं अ करन्तीओ तुमं वसीकरिस्सन्ति। (ञ)

साह। ता यदि कुलाङ्गनाः······।

मवा। बुद्धं। अत्यपत्थणाए धिट्टाओ जादाओ। (ट)

साह। (सोत्कण्ठम्) तदानय।

मवारको निष्क्रम्य तरुणीत्रयेण सह पुनः प्रविशति।

---

(ज) तत्तव वल्लभा कुलवधूरपि न दुर्ल्लभा भविष्यति; किन्तु अर्थप्रयोजनम्।

(झ) एषा खलु बाहुल्येनैव निर्व्वोधा धनिश्रेणी। तत् पण्यवधूरेव कुलवधूः कृत्वा आनेष्यामि। तत् कदा प्रार्थयसे ?

(ञ) मया खलु तिस्रस्तरुण्य आनीय रक्षिताः। तदिदानीमेव आगत्य नृत्यं सङ्गीतञ्च कुर्व्वत्यः त्वां वशीकरिष्यति।

(ट) बुद्धम्। अर्थप्रार्थनया धृष्टा जाताः।

तरुण्यो नृत्यन्त्यो गायन्ति ।

कुञ्जे कुञ्जे मञ्जु मञ्जु रटति मधुपः सुमनोरसपः,

सातिशयगुणवान् गुणगुणरववान् मोहितपादपः सेवितविटपः,

मृदुलपवने वन उपवने

चरति शोभने तुलितभूमिपः

प्रमदलोलुपः,

विकासिनलिनी स्फुटकुमुदिनी

विकचकामिनी गृहीतसमीपः

परिगतनीपः ॥

साह । (सानन्दोल्लासम्) साधु साधु । वयस्य !

सुरुचिरा रसिका च नवाङ्गना

नटति गायति भङ्गिमती यदा ।

युवमनोऽपि तदा विवशीभवत्

सपदि हृष्यति नृत्यति माद्यति ॥१२॥

मवा । वअस्स ! ता एदाणं पारितोसिअं ? (ठ)

साह । अवश्यमवश्यं प्रविश्यैव देयम् ।

मवा । (निष्क्रमणाय तरुणीषु नयनेङ्गितं करोति)

तरुण्यः । (निष्क्रामन्ति)

प्रविश्य प्रतिहारिणी । (भूमौ जानुयुगलं विन्यस्य साञ्जलि-बन्धम्) देव ! मिवाररात्रप्पहिदो को वि सन्देसहरो उवत्थाअ

---

(ठ) वयस्य ! तदेतासां पारितोषिकम् ?

(ड) देव ! मिवारराजप्रहितः कोऽपि सन्देशहर उपस्थाय

विस्सवेदि—अत्थि गुरुओ संवादो । ता झत्ति दुग्गणाधो सअं ज्जेव आअदुअ सुणादु त्ति । (ड)

साह । (सविरक्तिक्षोभम्) आः ! कोऽयमन्तरायः प्रमोदान्तरे ।

मवा । (साशङ्कम्) वअस्स ! मिवाररात्रप्पहिद त्ति केण वि गुरुएण हेदुणा होदव्वं । (ढ)

साह । श्रुतं किल पाषाणमूषिकः खल्वसौ विलास-विकलानलसांग्राध्यक्षान् विजित्य कियन्ति दुर्गाण्यध्यकार्षीदिति। तदिदमस्माभिः सुरक्षितीकृतम्, सन्ति च युद्धसन्नद्धा एव सपरिकरा योद्धारः । (किञ्चिद्विभाव्य) अथवा सन्धित्सयापि सन्देशहरः प्रेषितो भवेत् । (प्रतिहारिणीं प्रति) अये ! क्वासौ सन्देशहरः ?

प्रति । मन्तणाघरे । (ण)

साह । (उत्थाय) प्रदर्शय तस्य पन्थानम् ।

प्रति । इदो इदो देवो । (त)

इति निष्क्रान्तौ साहवाज-मवारकौ प्रतिहारिणी च ।

---

विज्ञापयति—अस्ति गुरुकः संवादः । तद्‌झटिति दुर्गनाथः स्वयमेवागत्य शृणोतु इति ।

(ढ) वयस्य ! मिवारराजप्रहित इति केनापि गुरुकेण हेतुना भवितव्यम् ।

(ण) मन्त्रणागृहे ।

(त) इत इतो देवः ।

अथ प्रविशति मन्त्रणाभवने साहवाजस्य मन्त्री नुरमहम्मदः, सेनापतिः सोलेमानः,मिवारदूतश्च।

नुर। (दूतं प्रति) क्रियतामासनग्रहणम्।

दूतः। (उपविशति)

मन्त्री सेनापतिश्च। (उपविशतः)

नुर। अयि! मयि वक्तुमर्हसि सन्देशम्।

दूतः। राज्ञः खल्वाज्ञामवज्ञाय भवति विज्ञापनमन्याय्यमेव भवति।

अथ प्रविशति साहवाजः।

सर्व्वे। (आसनानि परिहायोत्तिष्ठन्ति)

साह। नन्वध्यासतामासनानि भवन्तः। (उपविशति)

सर्व्वे। (उपविशन्ति)

साह। (दूतं प्रति) कमत्रभवन्तमवगच्छामि?

दूतः। अवगच्छतु तावत् समरसिंहं नाम मिवारेश्वरस्य सन्देशहरम्।

साह। कः खलु सन्देशः?

दूत। (एकां कशाम्, एकां शृङ्खलाम्, एकं तरवारिञ्च पुरस्ताम्निधाय) विजिगीषुस्तत्रभवान् मिवारेश्वरस्तत्र तत्र प्रयोज्यमिदं वस्तुत्रितयं सम्प्रेष्य यथाक्रमं प्रणयेन जयनिर्णयेन वीरनयेन च भवन्तं विज्ञापयति। (कशां प्रदर्शयन्) एषा कशा, इमामुपादाय तुरङ्गमारूढ़ः सस्वजन एव एतदहोरात्रान्तर एव चान्तरायमन्तरेण निरन्तरं प्रतिष्ठस्व प्रथमं दुर्गात्, परञ्च भारतवर्षात्।

नुर। (तीव्रामुक्तेजनां प्रद्योतयति)

सोलेमानः। (कोषादसिं निष्काशयति)

साह। (सोल्लुण्ठनहासम्) सन्देशहरः खल्वयम्। (हस्तसङ्केतेनोभाविव वारयति)

तावुभौ। (तद्भावाद्विरमतः)

साह। ब्रूहि निर्भयमनन्तरां वार्त्ताम्।

दूतः। अस्मिन् कल्पे विकल्पश्चेत्, (शृङ्खलां प्रदर्श्य) एषा शृङ्खला, इमां परिगृह्णन् अङ्गायैवोपसर्पन् विधेहि तावदात्मसमर्पणं परिधेहि चैनाम्।

सर्व्वे। (उल्लुण्ठनं सूचयन्तो हसन्ति)

साह। अथ तावती वार्त्ता ?

दूतः। अस्याः शेषांशभूता वर्त्तते वार्त्ता।

साह। विधेयवदेवाभिधीयतामभिधेयम्।

दूतः। अत्रापि तावदपत्रपसे चेत्, (तरवारिं निर्द्दिश्य) एष तरवारिः, एनमासाद्य खल्वद्यैव युद्धसन्नद्धः सत्वरमवतर समरचत्वरम्; वयमपि प्रायेण प्रत्यासन्नाः।

साह। अस्ति ते सावशेषं वचः ?

दूतः। कियन्मात्रमाकर्ण्यताम्।

हिन्दुस्थाने यवनवसतिर्नोचिता भारतेऽस्मिन्
नीहारौघस्थितिरिव शरद्व्योम्नि नक्षत्रदीप्ते।
तस्मादस्मान्निजनिजधिया यात यूयं स्वदेशान्
अस्रस्रोतः स्रवतु न खलु च्छिन्नभिन्नाच्छरीरात् ॥१३॥

साह। (सगर्वं तरवारिं परिगृह्य) सत्वरमुपेत्य ब्रूहि तं पाषाणमूषिकम्—

सुप्ते जने निभृतमेत्य चरन् गृहान्तः
आस्वादनं वसनकर्त्तनमत्यकार्षीः।
जाग्रज्जनेऽत्र भवने त्वसि चेद्दिविक्षुः
स्वं जीवनं सहजनं ननु हारयेथाः॥१४॥

दूतः। बाढ़ं ब्रवीमि। (साटोपं निष्क्रान्तः)

साह। श्रुता तावद्‌गर्वोक्तिर्वैरस्य। प्रायेण प्रत्यासन्ना वैरिण इत्यभिहितञ्च वार्त्तावाहिना। तेन च श्रोतुमिच्छामि संक्षेपेण विपक्षवृत्तान्तम्।

सोलेमानः। क्रोशान्तरे सन्निवेशिता शिविरावली, चतुरङ्गिनी सेना, संख्याश्च द्वाविंशतिसहस्राणि, प्रत्यासीदति च साटोपम्, संगृहीतञ्च विविधमाग्नेयमायुधम्।

साह। अस्माकं कीदृशमायोजनमायोधनस्य?

सोलेमानः। सर्वेष्वेव सेनाङ्गेष्वाधिक्यमस्माकम्। विहिताश्च दुर्गं परित एव परिखापारभूमयः पिहितविकीर्ण-विस्फोरकपूर्णाः, सम्मुखसेतुमुखे च वह्निमुखानि स्थापितानि चत्वारि वृहन्नालीकानि, सर्वदा सज्जिता चास्मत्सेना।

साह। (सोत्साहम्) साधु। प्रथममस्माभिरेवा-क्रमणीयम्, ईदृशञ्चायोधनं विधेयम्, यथा तच्चिरस्मरणीयं स्यात्। तत्त्वं त्वरस्व आरभस्व च संग्रामम्।

स्वशक्तिमभिदर्शयन् यवनगौरवं वर्द्धयन्
जयन् परवरूथिनीमखिलशात्रवान् संहरन्।

गृहाण च पुरस्कृतिं कुरु च कीर्त्तिमत्युत्तमां
स मान इव माननां व्रज च बादसाहादपि ॥१५॥

सोलेमानः । (सगर्वम्) बाढ़मेव वर्द्धयिष्ये देवगौरवम् । (साटोपं निष्क्रान्तः)

साह । अमात्य ! भवानपि जविनमेव वाजिनमारूढ़ः समन्तादेव सेनामुत्साहयन् आ विजयाद्विचर ; अहमपि युद्ध-सन्नद्धः सशस्त्रश्च भवामि ।

नुर । सर्व्वथा प्राप्तकालोऽयमादेशो दुर्गाध्यक्षस्य । (इति निष्क्रान्तौ)

दुर्गद्वारे आल्ला आल्ला ल्ला हो ! गुड़ म् गुड़ म् दुम् ।

सम्मुखे कियद्दूरे कालि ! कालि ! कालि ! दानव-द्राविणि ! गुड़ म् गुड़ म् दुम् ।

ससम्भ्रमं प्रविश्य नुरमहम्मदः । आरब्धमायोधनम् । तत्र चादिष्टोऽस्मि दुर्गाध्यक्षेण योधानां समुत्साहनायाम् । तत् समीक्ष्य सम्प्रहारावस्थां यथास्थानं विचरिष्यामि । (इति दुर्गद्वारस्थमुच्चस्तम्भमारुह्य विलोक्य च) साधु, उपक्रम एव महाविक्रमप्रकाशो यवनयोधानाम् । तथाहि—

वह्न्यालोकनिक्षिप्ता प्रयाति गुलिकावली ।
वह्निना निर्म्मिता मृत्योः पदवीव पुरोमुखी ॥१६॥

अहो ! वैचक्षण्यं विपक्षयोधानामपि । अमी हि गुलिकानां सम्मुखायनमपहाय पार्श्वयोरपसरन्तः सरल-मभिधावन्ति ।

नालोकगुलिका चेयं घूर्णिवात्या च सा समे ।
सम्मुखस्था विनश्यन्ति मुच्यन्ते पार्श्वगाः सुखम् ॥१७॥

(समन्तादवलोक्य साशङ्कम्) इमे च भिल्ला भटाः परिखायाः परपारमुपेत्य बद्धश्रेणयः खल्वश्रान्तशरक्षेपेण प्रतिपक्षस्य महासाहायकं सम्पादयन्ति, वारयन्ति चास्मन्नालोकगुलिका-श्मावरणेन। (विलोक्य सत्रासम्) हा धिक् हा धिक्, अमीभिरेव तीव्रशरताड़नेन त्वरयैव व्यापादिता वृहन्नालोक-रक्षितारो यवनयोद्धारः ।

नेपथ्ये कालि ! कालि ! कालि ! दानवद्राविणि !

तत् कथमुल्लासेन मारध्वनिर्हिन्दूनाम् । हन्त हन्त ! अस्माकं वृहन्नालोकगुलिकाविश्रामेणाश्रान्तमेवायान्ति क्षत्रिययोद्धारः, पलायन्ते च यवनयोधाः। (तारस्वरमाश्रित्य) भो भोः साहसैकसारा यवनवीराः! भवन्तः किल—

पलायमाना अपि ताड्यमाना-
स्त्यजन्त्यसून् किं सहितान् यशोभिः ।
अग्रेसरीभूय विनाश्य शत्रून्
क्रीणन्तु कीर्त्तिं चलनासुदानात् ॥१८॥

(विलोक्य सविषादम्) हा कथं न शृण्वन्त्यपि। तन्न स्थाने खल्वत्रावस्थानमिदानीम्। (इति त्वरितमवतीर्य्य निष्क्रान्तः)

ततः प्रविशत्याक्रामन् रणजित्सेन आक्रम्यमाणश्च सोलेमानः ।

रणजित्। अये यवनापसद ! चिराचरितदुश्चरितफलं प्राप्स्यसि खल्वस्मद्विक्रमादेव क्रमेण ।

स्वर्णप्रसूममलभारतपुण्यभूमिं
दैवात् पिशाचनिचया इव ये प्रविष्टाः।
सन्ताड़यन्त इह तानिव भूतवैद्याः
दूरात् सुदूरमपि सम्प्रति ताड़यामः ॥१८॥

सोलेमानः। रे रे हिन्दुकुलकलङ्क! आकर्णय तावद्गूढार्थम्।

दुर्म्मर्षणो व्रण इवातिजवादुदित्य
यो रूढ़वान् हृदयमर्म्मणि भारतस्य।
सोऽयं विजित्य यवनः खलु हिन्दुवैद्यान्
हत्वा क्रमादधिकरिष्यति सर्व्वमेव ॥२०॥

रणजित्। (सोन्मादमिव) आः पाप! प्रत्यक्षमीक्षसे क्षमतावैषम्यं विकत्थसे च। तदायाहि।

सोलेमानः। (सक्रोधकम्पम्) पश्य विक्रमं वीरधौरेयस्य। इत्युद्धतक्रमौ निष्क्रान्तौ।

नेपथ्ये कालि! कालि! कालि! दानवद्राविणि!

जयो मिवारजयः, जयः प्रतापसिंहजयः।

त्वरया प्रविश्य नुरमहम्मदः। (ससम्भ्रमोद्वेगविषादम्) हा धिक् हा धिक्, अश्रान्तमेवाक्रामन्ति हिन्दुयोद्धारः, पलायन्ते च मुक्तकच्छा यवनयोधाः। सञ्जातः सङ्घभङ्गः, लुप्ता जयाशा, संवृत्तः पराजयः, नष्टञ्च यवनगौरवम्। तदयमेवावसरः शेषचेष्टायाः। (तारस्वरमाश्रित्य) भो भोः समरदुर्द्धर्षा यवनवीराः! त्वरितम् अतित्वरितं क्रियतामग्निसंयोगो विस्फोरकेषु, निक्षिप्यतां निक्षिप्यताञ्चेन्धनं ज्वलज्ज्वलनेषु।

तत्क्षणात् सर्वतो दुर्गमग्निर्ज्वलति ।

नेपथ्ये आल्ला आल्ला ल्ला ल्हो !

उभययोधानां महती हुलहुल्लिका च वर्त्तते ।

नुर । (त्रिलोक्य सोल्लासम्) साधु कृतम्, अनुष्ठितः खल्वादेशो दुर्गाध्यक्षस्य ।

नेपथ्ये । भो भोः साधुसङ्कल्पा देशप्रिया भिल्लवीराः! सिच्यतां सिच्यतां परितः परिखाजलं ज्वलनेषु ।

भिल्लाः । (प्रविश्य तथा कुर्वन्ति)

नुर । (ससम्भ्रमम्) अहो अहो दुर्गचरकिङ्करनिङ्कर! आयान्ति दुर्द्दान्ताः । तेन च—

विचिनु विचिनु रत्नस्वर्णमुक्ताप्रवालान्
विचिनु च बहुमूल्यं भूषणञ्चांशुकञ्च ।
अपसर च यथेच्छं सर्वमादाय तूर्ण
भवतु ननु परेषां भस्ममात्रं हि लभ्यम् ॥२१॥

उद्धतक्रमं प्रविश्य शक्तसिंहः । दुरात्मन्! निःशेष-स्वध्वंसं पश्यन् दुर्गध्वंसमाकाङ्क्षसि । तत्तिष्ठ ।

त्वयैव प्रणीतेऽनले हिन्दुवस्त्वां
धरागर्त्तधेयं विमग्नं दहामि ।
नुर । प्रदाहाय वो ज्वालितेऽस्मिन् कृशानौ
पुरस्त्वां निक्षन्तन् भटैर्दाहयामि ॥२२॥

शक्त । (आक्रामन्) आः पाप दुरात्मन् !

नुर । (प्रत्याक्रामन्) आः पाप दुरात्मन् !

परस्परमाक्रामन्तौ निष्क्रान्तौ ।

ततः प्रविशतः साटोपगर्वोद्धतक्रमौ
साहवाजप्रतापसिंहौ।

साह। आः पाप! मेलिमनिर्धूतवीर्य्य निमर्य्याद! नाटकाभिनेतार इव वाङ्मात्रसाराः शरद्घनवद्गर्ज्जन-प्रधानाश्च पामरा हिन्दवोऽपि योद्धुं जानन्ति!

प्रताप। आश्चर्य्यम्, समक्षमोक्षमि स्वपक्षसंहारं हिन्दु-क्षतमेव, पश्यसि च सर्वथा निर्व्यूढमात्मनः पराजयम्; तथापि बीभत्ससे तानेव, गर्जसि चाजस्रम्, विकत्थसे चात्यन्तम्। तेन च (तरवारिमुद्यम्य)

अच्छिन्ने तव मस्तके नहि भवेत् स्पर्द्धाविरामो ध्रुवं

साह। (करवालमुत्तोल्य)

कच्छिन्द्यान्नु कस्य मस्तकमरे पश्याम्यहं पश्य च।
शूलमुद्धूयैव केनापि द्वारेण झटिति प्रविश्य शक्तसिंहः।
प्रागभिन्द्यामहमुज्ज्वलं दृढमुरः शूलेन शैलस्य ते
भल्लमास्फाल्यैव द्वारान्तरेण क्षिप्रं प्रविश्य शम्भुसिंहः।
द्रागभल्लेन कटूक्तिमल्लमधुना सन्दारयाम्यग्रतः॥२४॥

द्रुतं प्रविश्य शृङ्खलाहस्तो रणजित्सेनः।

न हन्तव्यो न हन्तव्यो वन्दीकर्त्तव्य एष तु।
हतः क्लेशं न बुध्येत वन्दीभूतस्तु बुध्यताम्॥२५॥

(इत्युत्प्लुत्य साहवाजस्य हस्तौ दृढं धारयति)

प्रतापसिंहः। (साहवाजस्य शिरस्त्राणं हरति)

शक्तसिंहः । (तस्य दक्षिणहस्तात्तरवारिमाच्छिनत्ति) ।

शम्भुसिंहः । (तस्य वामहस्ताच्चर्म्म नयति) ।

रणजित्सेनः । (तस्य हस्तयोः शृङ्खलां परिधाप्य) अरे ! स्मरेदानीमस्माकं शृङ्खलाप्रेषणम् । (इत्याकृष्य नयन् निष्क्रान्तः)

ततः प्रविशति जपव्यापृतहस्तः सुप्रभदेवोपाध्यायः ।

सर्वे । (विलोक्य प्रणमन्ति)

सुप्रभ । (हस्तमुद्यम्य) चिरञ्जीवनम्, नित्यं विजयम्, शाश्वतं कल्याणञ्च लभन्तां श्रीमन्तः ।

प्रताप । अथार्य्यः समराङ्गने ?

सुप्रभ । मिवारेश्वर ! अपरेषां दुःखांशमिव सुखांशमपि ग्रहीतुमिच्छन्ति ब्राह्मणाः । तेन च श्रुतवृत्तान्तो ब्रह्मानन्द-मधिगन्तुमुपागतः । तत् पृच्छामि—अपि सर्व्वथा सम्पन्नस्ते विजयः ?

प्रताप । भवतामाशिषा निःशेष एवायं नः सम्पन्नो विजयः ।

सुप्रभ । (सानन्दोच्छ्वासम्) हन्त ! धन्यो देशः, कृतार्था चार्य्यजातिः । तथा च—

आशालता नः सफलाद्य जाता
सत्या किलाशीरभवद्गुरूणाम् ।
सन्तानपोषी परदास्यपाशा-
न्मातेव मुक्तैव च जन्मभूमिः ॥२६॥

तत् किमन्यदाशास्ते प्रियमायुष्मान् ।

प्रताप । अतः परमपि प्रियमस्ति । तथापीदमस्तु—

भरतवाक्यम्—

काले वर्षतु वारिदो भवतु भूः सम्पन्नशस्या चिरात्
ईतिर्नश्यतु रीतिरस्तु रुचिरा भीतिः समा शाम्यतु ।
हिन्दूनां चिरभिन्नभिन्नमनसां नित्यैकता वर्त्ततां
शिष्टानुग्रहदुष्टनिग्रहविधिं देश्यैव चालम्बताम् ॥२७॥

(इति निष्क्रान्ताः सर्वे)

यवनिकापतनम् ।

———०———

द्वात्रिंशद्दुर्गविजयो नाम षष्ठोऽङ्कः ॥०॥

———०———

समाप्तञ्चेदं मिवारप्रतापं नाम नाटकम् ॥०॥

# वियोगवैभवम् ।

——ः०ः——

## प्रथमः सर्गः ।

——०——

मखभुवि शितिकण्ठः कण्ठमानीय कान्तां
भ्रमणमनणु चक्रे चक्रवद्यन्महिम्ना ।
परमपुरुषरूपोऽप्यर्द्धनारीशरीरो
रहयतु विरहोऽसौ दुःसहो वश्चिराय ॥१॥

स खलु त्रिदिवदीशः केवलं स्वर्गलोकं
प्रबलबहुलशक्तिर्मर्त्त्यमेकश्च सम्राट् ।
स च विषधरराजः शास्ति पातालमात्रं
त्रिभुवनमविरामं यस्तु शास्त्येक एव ॥२॥

दृढशरमपि यद्वन्मन्मथं पुष्पबाणं
विदलयदपि जीवान् जीवनं वा यथाम्बु ।
विमथितपथिकञ्चाप्योषधीशं यथेन्दुम्
अपि विरहिणि दोषं यं गुणं वक्ति विद्वान् ॥३॥

निवसति किल यः स्वाभावयुक्तोऽपि सत्त्वे
स्वयमपि गुणरिक्तो यो गुणाख्यां बिभर्त्ति ।

स्वमधिकरणरूपं तापयन् प्राणिवर्गं
हुतवहगतधर्म्मं सर्व्वदा यश्च धत्ते ॥४॥

कलयति हि वसन्ते काकली कोकिलानां
मुदितमदनदेवं चन्द्रमाश्चन्दनस्य ।
विजनजननिवासो यामिनीजागरा च
तटमपि च तटिन्या यस्त्वविश्रान्तमेव ॥५॥

सहचरमनुबध्नन् यश्च चश्चत्प्रभावं
युवकजनसमाजान् मन्मथो मन्यतीमान् ।
स इह तु मम वर्ण्यो वर्णनीयाग्रगण्यो
न खलु महिमहीनं स्तौति कश्चिद्विपश्चित् ॥६॥ (कुलकम्)

सुधियमपरपक्षं कल्पयंश्चित्तमेव
निजकरकृतभङ्गिस्तर्कयंस्तर्कशास्त्रम् ।
चिरविरहविशीर्णः कोऽपि नव्यो यवीयान्
शरदि दिवसशेषे जह्नुकन्या प्रतीरे ॥७॥

अदलितदलदूर्व्वापत्रमात्रप्रताने
तरलतरतरङ्गादुत्तरद्बिन्दुवृन्दे ।
विमलकमलमाला प्रोत्पतद्भृङ्गसङ्घे
प्लुतपतितपतङ्गश्रेणिसंश्रीयमाणे ॥८॥

उपगतदिननाथालिङ्गनश्रान्तिमत्याः
शमनदिगबलाया मन्दनिश्वासतुल्यैः ।
धृतमलयजगन्धैः सेविते गन्धवाहैः
अनतिचलितचक्षुः सन्नवात्सोदनन्यः ॥९॥ (विशेषकम्)

अथ कृततिलकां वा सान्द्रसिन्दूरतैलैः
दिनपतिरुपयातो यत्र सन्ध्यां क्रमेण।
नयनमिव धुवन्तो भ्रान्तभृङ्गच्छलेन
सह खलु दिनकान्त्या पद्मिनी मुद्रिताभूत् ॥१०॥

उपगतनिजभक्तान् साथ सन्ध्या विलोक्य
दिनमणिपरिरम्भाल्लज्जयेव व्यरंसीत्।
श्रमशिथिलकरोऽसौ संश्रयन्नम्बरान्तं
चरमगिरिगुहायामुष्णरश्मिश्च शिश्ये ॥११॥

चरमशिखरिशीर्षात् पूष्णि तस्मिन् विलीने
निविड़तिमिरराशिर्द्राग्विजिग्ये जगन्ति।
भृशनियतिनियोगादीश्वरेऽस्मिन् विपन्ने
भवति हि किल लोके जीयमानोऽपि जिष्णुः ॥१२॥

अहिमरुचि गतेऽस्तं पूर्व्वदिक्पर्व्वतान्तात्
उपपतिरिव सन्ध्यां तामधावत् सुधांशुः।
व्रजति परकलत्रं कामुको यः स्वदोषात्
भवति हि स कलङ्की लोकमध्ये मृदुश्च ॥१३॥

समुचितनवसन्ध्यारक्तवासो वसाना
मलिनमुखसरोजा लब्धताराक्षमाला।
विगलितशिशिराम्बुः सा दिनश्रीरभावात्
सवितुरिव विषण्णा मत्त्यधाम व्यमुञ्चत् ॥१४॥

स्त्रियमिव सह कुर्व्वन् तर्कचिन्तामसुष्य
शिशिररुचिरयासीन्मन्दमन्दं सुदूरम्।

मनसि च सहसान्या प्राविशत् कापि चिन्ता
स्फुटितकुमुदपुञ्जे चन्दिनी चन्द्रिकेव ॥१५॥

अथ हृदयजभावं वर्द्धयन् पार्श्वदेशे
उदचरदतिचारुः कामिनीकण्ठनादः ।
विरसलवणसमूहानीषदीषद्वहन्तं
दहनमिव नभस्वान् दुःसहः शीतलोऽपि ॥१६॥

प्रिय ! परिहर पन्नप्रायवस्त्राञ्चलं मे
न च वद चटुलोक्तिं शिक्षितोऽयं शुकस्ते ।
तव पितृजनयित्रीं वक्ति सर्वं प्रभाते
मृदु मृदु विहसन्ती सा ततो वीक्षते माम् ॥१७॥

कथयसि च ममौष्ठं त्वं दृढ़ं मास्म चुम्बीः
यदि दशनजचिह्नं वीक्षतेऽन्योऽपि कश्चित् ।
तव तु दशनदष्टादोष्ठविम्वात् समर्था
रहयितुमवगुण्ठं नास्मि सख्यन्तिकेऽपि ॥१८॥

पुनरपि तव पाणौ नार्पयाम्यं शुकं मे
परिचयपरिहानान्तेऽद्य वासो वसानाम् ।
गृहकृतिविधुरां मामालयः सन्निरीक्ष्य
कृतकलकलनादा ज्यायसीं वक्तुमीषुः ॥१९॥

त्वमपि तु मम चेलं न्यस्य सेस्मीयमानः
प्रकटयसि सखिभ्यो विह्वलत्वं ममैव ।
रसिक ! रहसि या या चाटुकोक्तिर्मयोक्ता
कृतबहुतरभङ्गिस्तां तु सर्व्वां ब्रवीषि ॥२०॥

तव तदनुभवन्तीं मां बलेनाधिरुह्य
दलयति हृदयं हा हन्त लज्जापि वर्थ्या ।
युवतिजनशरीरं प्रायशोऽधः करोतु
प्रतिमुखविधिनेदं किन्नु लिप्तं ललाटे ? ॥२१॥

इति विनयमनोज्ञां यावदुक्तिं शृणोति
नवविरहजभावोद्भेदभिन्नो वियोगी ।
मधुरमधरबिम्बोच्चस्त्वयाल्पप्रकाशः
युवजननिनदोऽभूद्गद्गदस्तावदेव ॥२२॥

जलधरपरिमुक्तः शोभते शीतरश्मिः
निविड़तिमिरतीर्णं पङ्कजश्च प्रभाते ।
पततिपततु चेलं तन्वि ! तेऽस्मान्नितम्बात्
तरुणि ! परमशोभां वाधते कस्त्वदन्यः ? ॥२३॥

यदि निजगुणकीर्त्तिं कीर्त्तयत्यन्यलोकः
भवति विकृतवुद्धिस्तत्र को वा निषेद्धा ? ।
निजकुसुमजगन्धान् सन्ततं गन्धवाहाः
दिशि विदिशि वहन्ते पादपः शान्त एव ॥२४॥

त्वदधरमधुभाण्डं चुम्बितुं नार्पितापि
दशति दशनमाला मे स्वयं किं करोमि ? ।
स्वयमिह खलु कर्णं वंशवंशोनिनादः
हरति च हरिणाङ्कः पङ्कजश्चापि लोके ॥२५॥

पुनरपि मम पाणौ दित्ससे चेन्न वस्त्रम् ?
अयमहमुपविष्टो मस्तके न्यस्तमस्तु ।

निधुवनप्रतिकूलं किन्तु लज्जादुकूलं
अहमिह चुचुकान्तात् पाणिना संहरामि ॥२६॥

तव वसनममुष्मिन्नालयं सन्दधानः
सखिजनमहमस्मात्तन्वि ! चेल्लज्जितासि ।
इदमयि ! मम वस्त्रं धारयन्त्यद्य तादृक्
त्वमपि तरुणि ! कृत्वा लज्जितं मां कुरुष्व ॥२७॥

युवतिजनशरीरं प्रायशोऽधः करोतु
यदिदमभिहितं तद्वैपरीत्यं करोमि ।
नवरसपरिपूर्णाद्युवुजभावोक्तताच्चेत्
कुचकलशयुगात्ते ते रसा निष्पतन्ति ॥२८॥

वचनमिदमुदस्यद्यावता कर्णरन्ध्रं
अविशदधरबिम्बाबाधनास्पष्टरूपम् ।
सपुलकतनु तूर्णं लोचनं चालयन् स
नवकुतुकनिविष्टस्तावतेत्थं ददर्श ॥२९॥

सुरसरिदुपतीरन्यस्तसोपानपङ्क्तेः
धवलविमलकान्तेः कस्यचिन्मन्दिरस्य ।
त्रितलगतकथञ्चिल्लम्बमाने गृहांशे
मुखनिहितगवाक्षश्रेणिसम्भृतदण्डे ॥३०॥

उपवनकुसुमालीलिङ्गिरिङ्गत्समीरे
विविधकुसुमकीर्णे सज्जताम्बूलभाण्डे ।
विमलमृदुलशय्याशालिखट्वे सुधांशु-
रुचिनिचयनिविष्टे नायिकानायकौ स्तः ॥३१॥ (युग्मकम्)

मृदु मृदु विहसन्त्या लोचने घूर्णयन्त्याः
पतितमिव दधत्या वामहस्तेन वस्त्रम् ।
विवृतरसनयासौ चर्व्वितान् स्वप्रियायाः
व्यतरदधरविम्बे चारुताम्बूलखण्डान् ॥३२॥

विलुलितरसनान्ते चारुताम्बूलखण्डान्
चलननयनयुग्मे चञ्चले लोचने च ।
पुलकितकुचकुम्भे साधु दत्त्वैव पाणिं
स्फुरितमधरविम्बं नायकोऽसौ निनिंसे ॥३३॥

स्तनयुगमतिगाढालिङ्गनादङ्गनायाः
अरुदद्दिव विकीर्णस्वेदविन्दुच्छलेन ।
जघनयुगलतोरात्यन्तदोदुल्यमान-
विरसितरसनाया मञ्जुना शिञ्जितेन ॥३४॥

करतलमुपलिप्तं लाक्षया यत्र यत्र
समुपहितवती सा कामिनी कान्तकाये ।
कुपितमदनमुक्तोद्दीप्तनाराचघात-
क्षतमरुणितचिह्नं तत्र तत्रैव जातम् ॥३५॥

अतिदृढपरिरम्भोत्पीड़नादाचकाङ्क्ष
स्तनयुगमिव गन्तुं दूरमन्यत्र मन्ये ।
नहि खलु महतेऽस्मिन्नुन्नतः कोऽपि लोके
परकृतपरिपीड़ामात्मदेशावलम्बी ॥३६॥

कटितटयुगलाभ्यात्पूर्णमन्योन्यहस्ते-
र्वसनयुगमधस्तात् सस्मितं कृष्यमाणम् ।

अपतदुपरि यावल्लज्जया सार्द्धमुर्व्याः
वदनमकृत तावत् सन्नतं स प्रवासी ॥३७॥

किमु विरहमहत्त्वात् किन्नु संसर्गदृष्टेः
किमुत विधिनियोगात् किन्नु वा भाग्यदोषात् ।
अभिनवमिव तत्तत् पश्यतस्तस्य तस्मिन्
सपदि हृदयमध्ये कोऽपि भावो बभूव ॥३८॥

सुविमलकरजालैरिन्दुना हन्यमानं
गिरिविवरमिवास्य स्वान्तगर्भं प्रविश्य ।
किमु नभसि सुधांशुर्वर्त्तते वा नवारिः
इदमिव परिवोद्धुं ध्वान्तमास्ये जगाम ॥३९॥

विपुलपुलकजालच्छद्मना पुष्पधन्वा
तनुमभिनदशेषां यत्र तस्मिन् वियोगी ।
विषमविरहमेवानङ्गपक्षं व्यनिन्दीत्
इयदिह हि बलं स्वं दुर्हृमेऽरौ मृदूनाम् ॥४०॥

विरह ! यदि सखा त्वं पुष्पकेतोरभिन्नः
किमु खलु विदधासि व्यत्ययं तद्गुणानाम् ।
प्रहरति स हि यूनामङ्गमन्योन्ययोगे
प्रकटितनिजरूपे त्वन्तु घोरं वियोगे ॥४१॥

उदयति मदने च प्रायशो दम्पतीनां
रतिरविरतमास्ते तत्त्व साक्षात् प्रहृष्टम् ।
त्वयि तु समुपयाते सा न यूनां कदापि
स्मृतिपथमपि याति स्वावलाततत्पराणाम् ॥४२॥

अपि च मदनयोगी सन्निधाने स्वकान्ता
वपुषि च परिभाति स्फीतता रोमहर्षात् ।
त्वयि तु समुपविष्टे सा प्रिया चित्तमध्यं
वपुरपि च तनुत्वं याति हन्त क्रमेण ॥४३॥

अनुपममरत्वं कामिनीवल्लभत्वं
प्रखरविशिखवत्त्वञ्चेति कामे प्रसिद्धम् ।
त्वयि न तदमरत्वं त्वं हि योगी म्रियेथाः
न च तव ललनास्ते नापि शस्त्रं कदापि ॥४४॥

अथ रिपुमपि वक्तुं त्वां न शक्ताः स्मरस्य
चरति यदुभयोर्धार्मिक एव स्वभावः ।
तव च मकरकेतोः सत्सहायो वसन्तः
त्वमपि च स च लोकेऽनङ्गनाम्ना प्रसिद्धः ॥४५॥

अयि विरह ! भवन्तं हन्त पृच्छामि किञ्चित्
प्रभवसि किमनङ्गो नूनमाजन्मनस्त्वम् ? ।
हरनयनविकीर्णेनाग्निना दाहकाले
सहचरकुसुमेषोर्येन दग्धोऽसि न त्वम् ॥४६॥

सुचिरमभिदधेऽहं चिन्तितं यत्तदद्य
स्मर ! विरह ! भवन्तौ नन्वनङ्गौ भवन्तौ ।
निजदलितजनानामुद्यतेभ्यः करेभ्यः
दृढतरकुपितानामात्मरक्षामवाप्तौ ॥४७॥

प्रहरति वहिरन्यो वीर्य्यवानायुधेन
स्रवति च किल रक्तं त्वक्त मर्म्म प्रहंसि ।

प्रतिदिनमस्त्रगन्तः शुष्यते च त्वया तत्
वद कुत इह चित्रः शिक्षितोऽयं प्रहारः ॥४८॥

प्रतिविपिनमुपेन्द्रं क्रन्दयामासिथ त्वं
अथ निनयिथ कण्ठं दक्षजाश्वेश्वरस्य ।
तदतिपुरुषकारं ते वयं निर्णयामः
रहसि हरसि जीवान् कातरत्वञ्च तेन ॥४९॥

श्रियमनिशमनैषीत् केशवः सर्वदेहं
तनुमकृत शिवार्द्धां सर्वयोगीश्वरोऽपि ।
अयि विरह ! महात्मन् ! तेन सत्यं वदामः
इह जगति भवन्तो भीतिमान् सर्व एव ॥५०॥

विरह ! न कुरु रोषं सङ्गतत्वाद्ब्रवीमि
न खलु तव समानो वर्त्ततेऽन्यो नृशंसः ।
प्रहरणसमये त्वं युक्तसर्वेन्द्रियोऽसि
भवसि तु परदुःखाकर्णने कर्णहीनः ॥५१॥

विरह ! न तव कान्ता श्रूयतेऽस्तीति काचित्
अनुभवसि न दुःखं तेन विच्छेदजन्यम् ।
अथ तव दयितास्ते चेत्तथापि स्व एव
नहि खलु निजदुःखं कोऽपि लोके ददाति ॥५२॥

अतिपटुरथवा त्वं नाङ्गनां पर्य्यणैषीः
क्वचिदपि ननु भव्यं संशयानो वियोगम् ।
अनुभवति हि दुःखं यत् स्वयं तत्परेभ्यो
न खलु भवति दातुं सस्पृहो दुर्ज्जनोऽपि ॥५३॥

इदमविशदवर्णं दीर्घनिःश्वासदीर्णं
वचनमसुखमाख्यन् स्वं प्रदेशं प्रवेक्ष्यन् ।
विरहविहितदुःखक्षुस्यचित्तः क्षणान्ते
निजवसतिमयासीत् स्वप्रियाप्रेषितात्मा ॥५४॥

अथ निजदयितायै प्रेरितस्तस्य चेतः
प्रकुपितविरहोऽसौ नास्ति सन्देहलेशः ।
सुविकसितमपीन्दुं सर्वदेहं दहन्तं
पथि यदयममंस्त ग्रीष्ममध्याह्नसूर्य्यम् ॥५५॥

सपदि विरहराजः पीड़िताङ्गस्य तस्य
समपिबदिव सर्वं शोणितं सर्वदेहात् ।
सकलबलमगच्छद्दुर्यौवनीयं विनाशं
अणुरपि किल पन्थाश्चाभवद्विप्रकृष्टः ॥५६॥

निजवसतिमुपेत्य प्राप्तकार्य्यस्य तस्य
न्यविशत दयितान्तः शैवले कौमुदीव ।
इह जगति वियोगे प्रेयसीवृत्तिमेव
मनसि युवजनानां जीवनोपायमाहुः ॥५७॥

सुमनसमिव वल्ली चन्द्रिकां यामिनीव
समितिरिव सुनीतिं पद्मिनीं दीर्घिकेव ।
विदुष इव च विद्या शश्वदुत्पन्नबुद्धिम्
अधिरूढमुपलेभे तेन शय्या विना स्त्रीम् ॥५८॥

अतुलसुखकरी या प्रेयसीसंश्रिताभूत्
वितरति परिपीड़ां सैव शय्या ममाद्य ।

सुविषमसमये हि प्राणिनां सर्वमेव
प्रियतममपि घोरं जायते शत्रुरूपम् ॥५८॥

अयि रजनि ! यदि त्वं ज्योत्स्नयात्यन्तशुक्ला
भवसि मयि तथापि-क्रोधिनो कालरूपा ।
बहिरिह विमलः स्याद्दुर्ज्जनः सर्व एव
ननु कथमथवा स्यात् सर्वविश्वासपात्रम् ॥६०॥

मुक्त्वा मादृग्विरहिविषयं ते प्रियामेति नाम
सन्तः स्त्रीमद्युवकविषये नूनमन्वर्थमाहुः ।
किंवा याह्रोत्यसकृदुदिता याम यामिह याम
त्रीनित्थं यत् कथयसि ततस्त्वां त्रियामां वदन्ति ॥६१॥

क्वापि ज्योत्स्नां क्वचिदपि निशामित्थमुत्थाय निन्दन्
क्वापि क्रन्दन् विषमशयने पार्श्वयोः संक्रमेण ।
संवृत्तोऽयं व्यथितहृदयस्तत्क्रियाकौतुकेन
हासं वामा द्रुतमिव ददौ शर्वरी वर्वरेव ॥६२॥

इति श्रीहरिदासकृतौ वियोगवैभवे खण्डकाव्ये
यामिनीवैभवो नाम प्रथमः सर्गः ॥०॥

———०———

## द्वितीयः सर्गः ।

---

अथ विकलकरान्तो धारयन् न्युब्जभावं
अरुणवदन इन्दुः शैलमस्तं जगाम ।
इह जगति विमूढ़ो वारुणीं सेवते यः
पतति हि स यदुच्चात्तत्तु प्रत्यक्षसिद्धम् ॥१॥

शिशिररुचि गतेऽस्तं चन्द्रिकोत्सृज्य वाष्पं
पिकविकलनिनादा स्रस्तदेहान्वगच्छत् ।
यदि न भवति तस्मिन् म्लेच्छराज्यं तदानीम्
अनुसरति पतिं या स्यात् सती सा यथार्थम् ॥२॥

कुसुमचयसमानं तारकाराशिमारात्
शिशिरसलिलविन्दून् मन्त्रपूताम्बु तुल्यान् ।
अतिमृदुलकराग्रैरेष निक्षिप्य सद्यः
उदगमदिव सूर्य्यः पूजयन् पूर्वसन्ध्याम् ॥३॥

तरणिकिरणराजीशूर्पसंशोध्यमानं
प्रखरतरविभासम्मार्जनीमृज्यमानम् ।
तिमिरपटलमूषाकन्ययोत्सृज्यमानं
प्रमिलितमिव तस्मिन्नस्तदर्य्यां पपात ॥४॥

त्रिभुवनजनचक्षुर्ध्वान्तराशिं निरस्य
प्रखरकिरणमाली सन् विवस्वान् रराज ।

उदयति समये यस्तीव्रतेजाः स्वदेशात्
नहि भवति विलम्बस्तस्य कश्चित् प्रकाशे ॥५॥

अधिरजनि वियोगाच्चिन्तयन् प्राणकान्तां
अनधिगतसुषुप्तिः शेषरात्रप्रसुप्तः ।
स्फुटमविगतनिद्रः प्रस्फुटेऽपि प्रभाते
निकट इव सुषुप्तां वल्लभामाललाप ॥६॥

इति वदसि ममान्ते वल्लभे ! त्वं सदैव
मदुरसि दयित ! त्वां नेतुमिच्छुर्यदाहम् ।
स्तनयुगमतितुङ्गं स्तम्भवत्तत्र रुन्धे
क्वचिदपि निजवस्तु प्राज्यदुःखं ददाति ॥७॥

इति खलु तव जाता सुस्पृहा निष्फलासीत्
अनुभव विपरीतां तामहं पूरयामि ।
मदुरसि दयिते ! त्वां पृष्ठसुप्तां विधाय
यदि तु गुरु नितम्बं नैव रुन्ध्यात्तदेमाम् ॥८॥

सपुलक इति जल्पन् वर्द्धयन् पाणियुग्मं
स्वसविध उपविष्टं कञ्चनान्यं सतीर्थम् ।
किमपि किल पठन्तं स्वीयकान्तेति मत्वा
मुदितनयन एवाकृष्टवान् गाढमेषः ॥९॥

अमृदुलतनुदेशं सान्द्ररोमाञ्चशून्यं
प्रकटितकरयुग्मालिङ्गनोद्योगहीनम् ।
मृदु मृदु हसदास्यं पूरुषं वीक्ष्य तेन
नयनमपि विकास्य द्राक् पुनर्मुद्रितञ्च ॥१०॥

उपगतमरुभूमिं पश्यतो यः पिपासोः
शशिमणिमभिलिप्सोर्यश्च जातो धृताग्नेः ।
धनिसदनयियासोर्यातदीनाश्रयस्य
य इह भवति तस्मिन् तं विषादं स लेभे ॥११॥

अतिसुखविषयेऽभूद्दारुणोऽलं विषादो
युवतिविसदृशोऽन्यो वल्लभालिङ्गने च ।
रजनिरियममुष्यां भावनायां दिनञ्च
सुनियतविषये वा क्लत्यता हीनबुद्धिः ॥१२॥

असुखमदनपीड़ाम्लानवक्त्रेण तस्मिन्
अविषयकृतयत्नप्राप्तशोकेन तेन ।
मुहुरपि मृदुदृष्टिर्मुद्रितोन्मीलिता द्राक्
असमय इव विद्युन्नव्यधाराधरेण ॥१३॥

अथ तदभिमुखः सन् सादरं वीक्ष्य भावं
स विरहिणमवोचद्धासकम्प्राग्रकायः ।
असदृशमिह कार्य्यं चेष्टमानस्य लोके
भवति हि ननु लाभः सत्परीहास एव ॥१४॥

अयि विधुर ! वियोगिन् ! गाढ़मालिङ्ग्य कान्तां
किमिति परमहासीर्नो विहारं विधाय ।
त्वमिह विरम कामी किन्तु कान्ताजनोऽयं
नहि खलु विरमेत्ते ग्राम्यधर्म्मादिदानीम् ॥१५॥

मदुरसि दयिते ! त्वां पृष्ठतो वेशयामि
यदिति कथितमेस्माश्चाहमालिङ्गनेच्छुः ।

किमिति न कुरुषे त्वं ? धूर्त ! मिथ्याविभाषिन् !
न वचनमथवा स्यात् कामिनां सत्यरूपम् ॥१६॥

इति निगदति सख्यौ प्रस्फुटात्तस्य तस्य
विरहदहनधूमच्छन्नवत् कृष्णकृष्णाः ।
विरलविमलभासो निर्गतः स्वल्पहासः
सहविपुलविषादश्वासवातेन वक्त्रे ॥१७॥

अपि हससि मुखे त्वं दुःसहं किन्तु चित्ते
विषमविरहदुःखं ज्ञायते श्वासहासात् ।
निजनिकटनिविष्टा वल्लभैषा तथापि
विरह इति तु मन्ये वल्लभान्यापि तेऽस्ति ॥१८॥

अथ शयनशयानं देहमायच्छमानः
सपदि सपदभङ्गं भिन्नवासा वसन् सन् ।
तदभिमुखमुखेऽसौ पाणिमानीय पाणौ
अवददिति सतीर्थं दुःखयोगी वियोगी ॥१९॥

स्वयुवतिजनयुक्तो भुक्तसङ्गः सदैव
विरहविहितदुःखं बुध्यसे मे कथं त्वम् ।
विमलनयनशाली नो जनो बुध्यते हि
सकलविफलभूतं दुःखमन्धस्य किञ्चित् ॥२०॥

अहनि विविधभावैरालपस्यालिलोकान्
निशि विहरसि गङ्गातीरहर्म्यैं युवत्या ।
अनधिगतवियोगक्लेशलेशस्त्वमस्मिन्
परिहससि परं मां का व्यथा तेन ते स्यात् ? ॥२१॥

स्मर ननु यदि लब्धः प्रेयसीविप्रयोगः
भृशमहमपि लोकानीदृगेवाहसं प्राक् ।
हसति यमधिकुर्वन् यो जनोऽन्यानबोधः
स हि खलु विषयस्तं संश्रयेत् सत्यमेव ॥२२॥

इति विरहिगिरं तां शुश्रुवान् सन् सतीर्थः
विशददशनकान्तिं भास्वरीं भासयन् सः ।
अचकथदिति वाचं कौतुकाकृष्टचेताः
कथय तव वियोगी कीदृशी चित्तवृत्तिः ? ॥२३॥

न खलु विरहदुःखं प्रेयसीमानवैति
तदिह किमु भवन्तं तस्य दुःखं ब्रवीमि ।
सति हि दशनवृन्दे कोऽपि किं कोविदोऽपि
स्वदनकथनदुःखं निवृ तो वेत्ति किञ्चित् ॥२४॥

जनकसखिजनादेरेकरूपाद्वियोगात्
युवतिजनवियोगः सर्वदुर्भेद एव ।
इह हि बहुललोकाः षड्रसानास्वदन्तो
न तु कथयितुमीशाः कस्य कीदृक् प्रभेदः ॥२५॥

भुवि भवति ययोस्तु प्रेम गाढं चिरस्य
व्यथयति विरहस्तावन्ययोः किन्नु दुःखम् ।
व्रततिविटपिनोः स्यान्निर्भरान्योन्यबन्धे
स्वलितवति विहानिर्भिन्नयोः स्वास्थ्यमेव ॥२६॥

भवति मम तु यादृक् चित्तवृत्तिर्वियोगी
प्रियसख ! शृणु तावत्तामहं वर्णयामि ।

समुपरि परिपूर्णाद्द्रोणतः शालितुल्या
स्खलति तव पुरा मे हृष्यतश्चेतसो वाक् ॥२७॥

कथयति यदि कश्चिद्विप्रयोगे प्रियाया
अमृतमितकथञ्चित् सङ्कथां किं क्षणेऽपि ।
सुनियतयतमानो नष्टचेष्टो जनस्तां
हरिण इव सुगीतां वंशगीतिं शृणोति ॥२८॥

अपि च विरहकाले यो बधूमानयेति
वदति विदितमर्म्मा विप्रयोगस्य पूर्वम् ।
शशधरमिव धारावर्षुकं सत्सुधानां
अभिलषति वियोगिस्वान्तमासेवितुं तम् ॥२९॥

सदपि हृदयमेतद्विश्रुतं क्लीवलिङ्गं
विहरति विरहे हि प्रायशः प्रेयसीषु ।
नर इति किमु वा तल्लिङ्गता शब्दनिष्ठा
प्रभवति किमु रन्तुं सान्यथा यत् कलत्रम् ॥३०॥

मनसि विरहदुःखं तन्मनो वल्लभायां
नियतरसवती सा वल्लभा चातिदूरे ।
पुनरपि मनसि स्याद्दूरता सैव शश्वत्
भवति विरहकाले सर्वमस्मिन्नपूर्वम् ॥३१॥

निविड़विवरमध्ये नेत्रयुग्मं विकान्ति
मनसि च दयिता सानन्दथुः कन्दरे च ।
अखिलविषयवाञ्छा व्योम्नि गात्रं तनुत्वे
ननु विरहिजनानां हन्त याति क्रमेण ॥३२॥

सति च हृदययोगे दम्पतीनां सदैव
विरह इति प्रसिद्धा देहयोर्विप्रयोगात्।
सवितुरपि नलिन्या लब्धहस्तान्तरायाः
कथयति किल योगं तेन स प्राज्यरूपः ॥३३॥

अपरयुवकलीलालापमाकर्ण्य यस्य
विपुलपुलकजालं सर्वदेहे चकास्ति।
अतिपटुविरहेणाधीनमेनं विधातुं
परित इव विकीर्णं सर्षपासारवृन्दम् ॥३४॥

निधुवनमिह यूनोर्निर्बहिर्निर्निनादं
नहि च भवति लज्जा कापि पश्यज्जनेभ्यः।
प्रचरति च प्रशस्तिर्मानसीनां क्रियाणां
अनुभवति च दुःखं विप्रयोगे तथापि ॥३५॥

अविरतरतिकार्य्यं चेतसैवोपपाद्यं
न च कियदपराधात् कामिनी मानिनी स्यात्।
चरणपतनजन्या मानहानिश्च न स्यात्
अपि च विरहकाले सर्वनव्या व्यथन्ते ॥३६॥

निशि शयनगतस्य प्राप्ततन्द्रस्य यूनः
वितरति यदि यूनो दर्शनं स्वप्नकाले।
पशुपतिरिव सद्यो जाततन्द्राप्रभङ्गः
रतिरहितमनङ्गं हन्त तस्मिन् करोति ॥३७॥

प्रकृतिजमपि धैर्य्यं विप्रयोगो भिनत्ति
यदिति तदुपसर्गस्यादिमो हि स्वभावः।

गणगतयुजिधातुर्योगमर्थं व्यनक्ति
गमयति खलु तस्य व्यस्तमर्थं विशब्दः ॥३८॥

शतमपि परिरोद्धुं चेष्टते तं वियोगं
न तु भवति कृतार्थः कोऽपि रुन्धे स एव ।
स्खलति हि महिमा नो क्वापि सर्वातिगस्य
नगमपि परिभञ्जन् निर्झरो याति सिन्धुम् ॥३९॥

अवहिरमिततेजोराशियुक्तं महान्तं
प्रतिदिनममयोगेनापि संवर्त्तमानम् ।
प्रखरविरहवह्निं देहशैलेऽनुमातुं
प्रभवति तनुशोषान्माहृशो दुःखहेतोः ॥४०॥

इति गिरमभिधाय ध्यायतः प्रेयसीं स्वां
सपदि विरहिणोऽस्यामन्दमस्यन्ददक्ष्णः ।
मदनदहनतापैः पच्यमानस्य फेनः
निरवसरकवोष्णप्रस्रुताश्रुच्छलेन ॥४१॥

वचनमिदममुष्याकर्णयन् कीर्णकर्णः
सुहृदनुगुणतयैवाप्रोयताय सतोर्थः ।
भवति हि समये यद्भाषितं युक्तियुक्तं
अमृतमपि विहाय श्रेयसाश्रीयते तत् ॥४२॥

प्रियसख ! वचनं ते मत्स्वभावानुरूपं
तदिह सुखयते मां नान्यथारूपमस्मात् ।
द्रवति सलिलसेकान्मृत्तिका नाग्नितापात्
गहनदहनतापात् सीसकं नाम्बुसेकात् ॥४३॥

दिनमिदमपि जातं मित्र ! पाठावसानं
स्मरसि च रसिक ! त्वं प्रेयसीमुन्मनाश्च ।
सुखमनुभव तूर्णं तेन कान्तायुताख्यं
उषसि चरति नाली पद्मिनीमन्तरेण ॥४४॥

इति निजमतरूपां भारतीं शृण्वतोऽस्य
प्रथममपि प्रियायां निःसरन्मानसस्य ।
अभिमुखमिव नौका स्वानुकूलाम्बुवाता
झटिति किल कलत्रं प्रत्यगच्छन्मनीषा ॥४५॥

किमुत भवति कान्ता दर्शनं वा नवेति
स्मरणविचलितात्मा प्रत्यगात् स्वां पुरीं सः ।
जलधिरिव शशाङ्के शोभमाने प्रतीरं
मतिरिह हि नियुङ्क्ते जन्मिनः कार्य्यजाते ॥४६॥

अथ भवनगतोऽसौ प्राणकान्तामवीक्ष्य
मुखमसितमकार्षीन्निष्फलात्मप्रयत्नः ।
न भवति विशदात्मा वासरो हि प्रभाते
तरणिकिरणकान्तिं सन्ततामन्तरेण ॥४७॥

मृगयितुमपि शक्तो लज्जया प्रेयसीं न
द्विगुणविरहकष्टाद्दीर्घतापं प्रसेहे ।
अपि च हृदयशोषं द्रागशेषं पुपोष
नद इव दिनशेषे कौमुदीमन्तरेण ॥४८॥

बहुलविरहकालं सोऽतियातोऽपि कष्टात्
अणुमपि परिशिष्टं नेतुमेवाक्षमोऽभूत् ।

स्थलमुपरितनस्थं तुल्यमार्द्रद्विहस्तं
वदति दुरधिरोहं तालवृक्षाधिरोहे ॥४९॥

पितृभवनगता किं ? तर्हि वार्त्तां लभेयं
किमपि नु कुरुते किं ? तर्हि मां द्रष्टुमिच्छेत् ।
किमुत हतविधिर्मामेकशेषं चकार ?
न च पुनरभिवृत्तौ द्वन्द्वसंज्ञे समासे ॥५०॥

विरहसितशरीरां बिभ्रतीमेकवेणीं
विगतसकलभूषां दूरसूर्य्यामिवोषाम् ।
परित इव वसन्तः फुल्लितां पुष्पलक्ष्मीं
गृहगतदयितां तामाननन्दावलोक्य ॥५१॥

अथ स विरहशेषस्तं तदा लिप्समानं
अधरमधुरिमाणं वल्लभाया ववाधे ।
अपि दहनविहीनं तापमात्रप्रवीणं
अतनु तपति हस्तं न्यस्तमात्रं हि दारु ॥५२॥

सकलकुशलपृच्छानन्तरं नव्ययोगो
विरहतृषितकान्तामिलनोत्कण्ठितः सः ।
अभिदधदपि वार्त्तां पृच्छते स्वां जनाय
सपदि दिनकृतोऽस्तप्रस्थितौ लालसोऽभूत् ॥५३॥

अतिचिरयसि भास्वन्नम्बरान्तं प्रयातुं
किमु किमपि नवीनं पूर्वतः पश्यसीह ।
इह दिनकर ! मर्त्ये ब्रह्मलोकभ्रमेण
भ्रमसि नभसि किंवा मन्दमत्यन्तमद्य ॥५४॥

मिहिर ! पतनमास्ते सत्यमेव त्वदीयं
तदिह किमु विलम्बं दुःसहं मे करोषि ?।
अयि नभसि सहाश्वैः स्यन्दनं स्थापयित्वा
स्वयमभिपत तूर्णं शैलसुत्प्लुत्य सूर्य्य ! ॥५५॥

वदत इति चिरस्य स्वान्तदुःखेन सार्द्धं
तरणिरगमदस्तं वाक्यमस्यैव शृण्वन्।
उदभवदपि रात्रिस्तत्प्रमोदेन सार्कं
सति हि सुसमये स्यात् सर्वतः सौख्यमेव ॥५६॥

अधिगतशयनीयो वल्लभागत्यपेक्षी
दलरवमपि शृण्वन् तूर्णमुत्कीर्णकर्णः।
मुहुरुपगममार्गं वल्लभाया विलोक्य
सपदि विकलितात्मा चिन्तयामास भूयः ॥५७॥

ननु विरह ! किमस्मिन् पुञ्जभूतो भवन् मां
प्रहरसि विदधानो रोषमासन्ननाशः।
खलमतिरथवासौ सूर्य्यपुत्रो जनानां
वितरति बहुदुःखं स्वीयकालावसाने ॥५८॥

इति स बहुविषादं चिन्तयन्नेव कान्तां
परिहृतपरितापां शिञ्जितैर्नूपुरस्य।
शशभृदिव दिनान्ते शेषसन्ध्यामवाप्य
विरतमलिनभावः फुल्लितामाननन्द ॥५९॥

शयनमिलितयूनोः कोऽग्रतो वक्ति वाक्यं
किमपि च वदतोऽस्यं प्रागभूच्चिन्त्यतर्कः।

तदनु दयितपृच्छानन्तरं वक्तुमोत्तिः
च्चणमभवदतीतं वाक्यमन्योन्यजन्यम् ॥६०॥

उक्ता तत्तद्विरहदिवसे चिन्तितं यद्यदासीत्
मध्यस्थाने चलति न यथा तन्तुरेकोऽपि सूक्ष्मः ।
छित्वा हारं तमिव विरहं दीर्घशतं निपिष्टुं
तादृक् तस्मिन्नुभयमुभयोर्निर्भरादालिलिङ्ग ॥६१॥

आदौ मया षोड़शवर्षवर्त्तिना
विनिर्म्मितं कंसवधाख्यनाटकम् ।
काव्यं ततः शङ्करसम्भवं परं
श्रीजानकीविक्रमनाटकं कृतम् ॥६२॥

तज्जानकीविक्रमनाटकान्ते
सप्तैकनागेन्दुमिते शकाब्दे ।
एकोनविंशाब्दवयःस्थितात्मा
व्यधादिदं श्रीहरिदासशर्म्मा ॥६३॥

——:००:——

समाप्तमिदं वियोगवैभवं खण्डकाव्यम् ॥०॥

——०——